# सांख्याचार्याणां परम्परा

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य

( मानितविश्वविद्यालयस्य )

सांख्ययोगे विशिष्टाचार्यस्य (M.Phil) इत्युपाधये

प्रस्तुतोऽयं लघुशोधप्रबन्धः

वर्षम् : 2014-15





| शोधनिर्देशकः | संङ्कायप्रमुखो विभागाध्यक्षश्च | अनुसन्धाता |
|---|---|---|
| डॉ. मारकण्डेयनाथतिवारी | प्रो. महेशप्रसादसिलोड़ी | विभूतिकुमारः |

## सांख्ययोगविभागः

दर्शनसङ्कायः

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

( मानितविश्वविद्यालयः )

नवदेहली-110016


CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri

# सांख्याचार्याणां परम्परा

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
(मानितविश्वविद्यालयस्य)

सांख्ययोगे विशिष्टाचार्यस्य (M.Phil) इत्युपाधये
प्रस्तुतोऽयं लघुशोधप्रबन्धः
वर्षम् : 2014-15





शोधनिर्देशकः
डॉ. मारकण्डेयनाथतिवारी

संङ्कायप्रमुखो विभागाध्यक्षश्च
प्रो. महेशप्रसादसिलोड़ी

अनुसन्धाता
विभूतिकुमारः

## सांख्ययोगविभागः

दर्शनसङ्कायः

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानितविश्वविद्यालयः)
नवदेहली-110016


CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

डॉ. मारकण्डेयनाथतिवारी
आचार्यो सांख्ययोगविभागे
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानित-विश्वविद्यालयः)
कुतुब-सांस्थानिकक्षेत्रम्, नवदेहली-16




दिनाङ्कः 16.03.2016

# मार्गनिर्देशकप्रमाणप्रत्रम्

मदीये निर्देशने **विभूति कुमारः** उपाख्योऽनुसन्धातृच्छात्रो **"सांख्याचार्याणां परम्परा"** इति विषयमधिकृत्य श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य (मानित-विश्वविद्यालयस्य) **विशिष्टाचार्यः (M.Phil)** इत्युपाधये यथाविधि स्वाध्यायमननविश्लेषणनूतनचिन्तनादिसम्पन्नमनुसन्धानप्रबन्धमिममरचयत्।

अनुसन्धातुरिदङ्कार्यं स्वकीयविश्लेषणादिफलत्वान्मौलिकमिति प्रतिज्ञापयामि। अहमिममनुसन्धानप्रबन्धं **'विशिष्टाचार्य'**रित्युपाधये प्रस्तोतुं संस्तौमि।

मार्गनिर्देशकः

(डॉ. मारकण्डेयनाथतिवारी)

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

**डॉ. मारकण्डेयनाथतिवारी**
आचार्यो सांख्ययोगविभागे
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानित-विश्वविद्यालयः)
कुतुब-सांस्थानिकक्षेत्रम्, नवदेहली-16




दिनाङ्कः: 16.03.2016

# मार्गनिर्देशकप्रमाणप्रत्रम्

मदीये निर्देशने **विभूति कुमारः** उपाख्योऽनुसन्धातृच्छात्रो **''सांख्याचार्याणां परम्परा''** इति विषयमधिकृत्य श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य (मानित-विश्वविद्यालयस्य) **विशिष्टाचार्यः (M.Phil)** इत्युपाधये यथाविधि स्वाध्यायमननविश्लेषणनूतनचिन्तनादिसम्पन्नमनुसन्धानप्रबन्धमिममरचयत्।

अनुसन्धातुरिदङ्कार्यं स्वकीयविश्लेषणादिफलत्वान्मौलिकमिति प्रतिज्ञापयामि। अहमिममनुसन्धानप्रबन्धं **'विशिष्टाचार्य'**रित्युपाधये प्रस्तोतुं संस्तौमि।

**मार्गनिर्देशकः**

(डॉ. मारकण्डेयनाथतिवारी)

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

# प्रतिज्ञापत्रम्

**"सांख्याचार्याणां परम्परा"** इति शीर्षकाधिपरिशीलितानुसन्धानप्रबन्धोऽयं **डॉ. मारकण्डेयनाथतिवारी**महोदयानां मार्गनिर्देशने नामाङ्कितः परिशीलनपुरस्सरञ्च लिखितो **'विशिष्टाचार्य'**रित्युपाधये (M.Phil) मया प्रस्तूयते। अत्र प्रतिपादिताः सर्वे विषयाः प्रमाणसङ्कलनम्प्रविध्यनुप्रयोगप्रकारश्च मयैव परिशील्यानुसन्धितमिति प्रतिश्रृणोमि।

Vibhuti

**अनुसन्धाता**

दिनाङ्कः - 16-03-2016

विभूतिकुमारः

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

# कृतज्ञताज्ञापनम्

प्रातः स्मरणीययोः मातृपितृचरणकमलयोः सादरं प्रणतिं समर्पयामि। विद्यापीठस्य सांख्ययोगविभागे अध्यापनरतानामाचार्यगुरुवर्य्याणां **डॉ. मारकण्डेयनाथतिवारी**महोदयानां कृते हृदयेन कार्तज्ञ्यं विभर्मि, नमामि च येषां प्रेरणयेदं कार्यमभवदिति। अतस्तेषां चरणयोः वाक्यपुष्पाञ्जलिं समर्पयामि। एवं सांख्ययोगविभागे अध्यापनरतानां विभागाध्यक्षणां दर्शनसङ्कायप्रमुखानां **प्रो. महेशप्रसादसिलोड़ी एवं डॉ. रविशङ्करशुक्ल-** गुरुवर्य्याभ्यां कार्तज्ञ्यमपि विज्ञापयामि। एतौ महोदयौ सदा शोधकार्यं प्रति प्रेरितवन्ताविति। मम भ्राता **निलेशकुमारः** एवं **राजीवचौधरी** महोदयानां कृते कार्तज्ञ्यमपि विज्ञापयामि। अतः अनयोः कृते धन्यवादं वितरामि नमामि च। एवं मम लघुशोधप्रबन्धे ये प्रत्यक्षरूपेणाप्रत्यक्षरूपेण सहयोगं कृतवन्तः, तान् प्रति कार्तज्ञ्यं ज्ञापयामि।

अन्ते शोधप्रबन्धस्य संस्कृतभाषायां टङ्कणमतिश्रमसाध्यं भवति। तादृशं श्रमं कृत्वा प्रबन्धस्य टङ्कणकार्यं येन सम्पादितम्, मम **सुहृत् मित्रः संदीपपैन्यूली-** महाभागान् प्रत्यहं सहृदयतः साधुवादं कार्तज्ञञ्च प्रकटयामि।

**विदुषामनुचरः**

**विभूति कुमारः**



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

# सङ्केतसूची

| | | |
|---|---|---|
| श्वेत. | – | श्वेताश्वरोपनिषद् |
| वा. पु. | – | वायुपुराणम् |
| श्रीमद्भा. | – | श्रीमद्भागवतम् |
| श्रीमद्दे. भा. | – | श्रीमद्देवीभागवतम् |
| महा. | – | महाभारतम् |
| वि. पु. | – | विष्णुपुराणम् |
| योग. | – | योगभाष्यम् |
| महा.शा.प. | – | महाभारतशान्तिपर्वम् |
| ब्रह्मा. पु. | – | ब्रह्माण्डपुराणम् |
| कू. पु. | – | कूर्मपुराणम् |
| अ. पु. | – | अग्निपुराणम् |
| महा. स. प. | – | महाभारतसभापर्वम् |
| ब्र. वै. पु. | – | ब्रह्मवैवर्तपुराणम् |
| महा. शा. प. अ. | – | महाभारतशान्तिपर्वम्, अध्यायः |
| क. स. सा. | – | कथासरित्सागरः |
| महा. श. प. | – | महाभारतशल्यपर्वम् |
| क. उ. | – | कठोपनिषद् |


CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

| | | |
|---|---|---|
| म. पु. | – | मत्स्यपुराणम् |
| ना. पु. | – | नारदपुराणम् |
| स्क. पु. | – | स्कन्दपुराणम् |
| वा. रा. | – | वाल्मीकिरामायणम् |
| सां. का. | – | सांख्यकारिका |


CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

# विषयानुक्रमणिका

| विषयः | पृष्ठाङ्कः |
|---|---|




CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

# भूमिका

**दर्शनशब्दस्यार्थः परिभाषा च**

दर्शनशब्दोऽयं संस्कृतस्य प्रेक्षणार्थकाद् दृश्धातोः (दृशिर् प्रेक्षणे) ल्युट्प्रत्यये अनादेशे च कृते दर्शनमिति सिद्धम्। 'दृश्यते अनेन इति दर्शनम्' उपनिषत्सु सत्यस्य दर्शनाय दृश् धातोः प्रयोगोऽभवत्। अर्थात् ज्ञानचक्षुषा यद् आत्मेत्यादि अलौकिकं वस्तु गृह्यते तद् दर्शनम्।

(i) येन साधनेन इदं विश्वम्, इदं वस्तुजातम्, ब्रह्म, जीवात्मा, प्रकृतिश्च, यथातथ्येन दृश्यते निरीक्ष्यते परीक्ष्यते समीक्ष्यते विविच्यते च यत्र तद् दर्शनम्।

(ii) समग्रमपि आध्यात्मिकमाधिभौतिकञ्च विवेचनं दर्शन-शब्दान्तर्गतं भवति।

(iii) दर्शनम् इत्यस्य आङ्ग्लपदं भवति Philosophy इति। इदञ्च Philosophy इति पदं यूनानी (Greek) Philos, Sophia इति पदद्वयेन निष्पन्नम्। यस्य च अर्थः - Philos = Love, Sophia = Wisdom भवति। एवञ्च सारांशरूपेण वदामः चेत् Love of Wisdom 'विद्यानुरागः' इति दर्शनस्यार्थः भवति।

(iv) केचन दार्शनिकाः वदन्ति यत् यत् Philosophy इति पदं लैटिन (Latin) भाषातः Phil+Sophy इति पदद्वयं स्वीकृत्य आगतमस्ति। यस्यार्थः - Phil = Priciple तत्त्वम्, Sophy = Science शास्त्रमिति भवति। एवञ्च Philosophy इत्यस्य अर्थः 'तत्त्वशास्त्रम्/तत्त्वविज्ञानम् Principles of Science इति।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

# भूमिका

## दर्शनशब्दस्यार्थः परिभाषा च

दर्शनशब्दोऽयं संस्कृतस्य प्रेक्षणार्थकाद् दृश्धातोः (दृशिर् प्रेक्षणे) ल्युट्प्रत्यये अनादेशे च कृते दर्शनमिति सिद्धम्। 'दृश्यते अनेन इति दर्शनम्' उपनिषत्सु सत्यस्य दर्शनाय दृश् धातोः प्रयोगोऽभवत्। अर्थात् ज्ञानचक्षुषा यद् आत्मेत्यादि अलौकिकं वस्तु गृह्यते तद् दर्शनम्।

(i) येन साधनेन इदं विश्वम्, इदं वस्तुजातम्, ब्रह्म, जीवात्मा, प्रकृतिश्च, यथातथ्येन दृश्यते निरीक्ष्यते परीक्ष्यते समीक्ष्यते विविच्यते च यत्र तद् दर्शनम्।

(ii) समग्रमपि आध्यात्मिकमाधिभौतिकञ्च विवेचनं दर्शन-शब्दान्तर्गतं भवति।

(iii) दर्शनम् इत्यस्य आङ्ग्लपदं भवति Philosophy इति। इदञ्च Philosophy इति पदं यूनानी (Greek) Philos, Sophia इति पदद्वयेन निष्पन्नम्। यस्य च अर्थः - Philos = Love, Sophia = Wisdom भवति। एवञ्च सारांशरूपेण वदामः चेत् Love of Wisdom 'विद्यानुरागः' इति दर्शनस्यार्थः भवति।

(iv) केचन दार्शनिकाः वदन्ति यत् यत् Philosophy इति पदं लैटिन (Latin) भाषातः Phil+Sophy इति पदद्वयं स्वीकृत्य आगतमस्ति। यस्यार्थः - Phil = Priciple तत्त्वम्, Sophy = Science शास्त्रमिति भवति। एवञ्च Philosophy इत्यस्य अर्थः 'तत्त्वशास्त्रम्/तत्त्वविज्ञानम् Principles of Science इति।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

(v) 1. किं ब्रह्म? 2. तस्य किं स्वरूपम्? 3. कः ईश्वरः? 4. के तस्य प्राप्तेरूपायाः? 5. अस्मिन् जगति कं शाश्वतं तत्त्वम्? 6. इयं सृष्टिः कुतः आविर्वभूव? 7. जीवात्मनः किं स्वरूपम्? 8. कः पुनर्जायते? 9. किं लिङ्गशरीरम्? 10. जीवनस्य कुत उद्भूतिः? 11. किं तस्य लक्ष्यम्? 12. कथं मोक्षावाप्ति? 13. आत्मा चेतनोऽचेतनो वा? 14. कः सृष्टेः कर्ता? 15. किं जीवनस्य कर्त्तव्यम्? 16. कस्य जीवनस्य साधिष्ठः पन्थाः? इत्यादयोऽनुयोगाः सूक्ष्मातिसूक्ष्मेण यत्र विविच्यन्ते तद् दर्शनम्।

(vi) ऋषयः स्वाऽलौकिकचक्षुभिरवलोकितानां तत्त्वानां मनसि आकलय्य यः उपदेशः ग्रन्थेषु प्राणिभ्यः कृतः तदेव दर्शनेनाऽभिधीयते।

(vii) दर्शनं सामाजिकचेतनायाः रूपमस्ति। अत्र व्यक्तित्वस्य बोधस्य च, साधारणविधीनां विषये, चिन्तनानां व्यक्तीनां च सम्बन्धे सङ्कल्पाः सन्ति। इदं दर्शनमेकप्रकारकं विज्ञानमस्ति, परमिदं विशिष्टप्रकारकं विज्ञानं वर्त्तते। यः प्रकृतेः समाजस्य च, विचारणीयविधीनाञ्च अध्ययनं करोति एतदर्थमस्य मुख्यानि सामाजिकप्रकरणानि, विशिष्टैः विज्ञानैः सह तुलनां कृत्वा सम्यक्प्रकारेण विचारणीयानि सन्ति।

(viii) दर्शनशास्त्रस्य अध्ययनेन जगतः ईश्वरस्य, जीवस्य, मायायाः प्रकृतेश्च ज्ञानं भवति। एतदतिरिक्तं सत्यासत्ययोः शरीरस्य, इन्द्रियसमूहस्यापि अनेन ज्ञानं भवति। इदं जगत् पदार्था वा जीवानां कृते दुःखानां कारणमस्ति। एभ्यो दुःखेभ्यो मोक्षो



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

मुक्त्या सर्वदु:खनिवारणेन वा सम्भव:। कार्यकारणयो: तत्त्वज्ञानं दर्शनेनैव भवितुं शक्यते।

(ix) मनुष्य: स्वभावतो मननशील: प्राणी विद्यते, मत्या कर्मणि सौक्यतीति तन्निरुक्तिरपि पूर्वोक्तानुकूला, सा हि कोऽहं कस्मादहमित्यादि समस्या: सततं भावयित्वा 'आत्मा वा अरे द्रष्टव्य: श्रोतव्यो मन्तव्यो निदिध्यासितव्य:' इति। दर्शनस्योदयो वेदकालाद् एव अजायत। दर्शनं द्विविधं आस्तिकं नास्तिकञ्चेति। (1) तत्र अस्ति दिष्टम्, अस्ति वेदप्रामाण्यम्, अस्ति ईश्वरो वा, इति मतिर्यस्य स: आस्तिक:। (2) नास्ति दिष्टम्, नास्ति वेदप्रामाण्यम्, नास्ति ईश्वरो वा, इति मतिर्यस्य स: नास्तिक:। आस्तिकविचारकानि वैदिकानि दर्शनानि, नास्तिकविचारकानि अवैदिकानि दर्शनानि इति व्यवह्रियते।

## सांख्यदर्शनस्य स्वरूपम्

भारतीयदर्शनपर्यालोचने इदानीं सांख्यदर्शनमाश्रित्य विवेचनमुपस्थाप्यते। भारतीयदर्शनानि नास्तिकास्तिकभेदेन भागद्वये विभक्तानि सन्ति। नास्तिका-स्तिकादीनां निर्णयस्तु 'नास्तिको वेदनिन्दक:' तथैव 'आस्तिको वेदपूजक:' इति मनुस्मृतिप्रमाणमाश्रित्य विधीयते।

**संख्यां प्रकुर्वते चैवं प्रकृतिं च प्रचक्षते।**
**तत्त्वानि च चतुर्विंशत्तेन सांख्या:प्रकीर्तिता:।।**



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

भारतीयास्तिकदर्शनेषु सांख्यदर्शनस्यातीव सुविशिष्टं स्थानमस्ति। अस्य शास्त्रस्य मूलप्रवर्त्तकाचार्याः महर्षिकपिलः समभवन्। सांख्यशब्दस्य व्युत्पत्तिः सांख्याशब्देनैवाभूत्, प्रायः गणनार्थकः संख्याशब्द एव सांख्यशास्त्रस्य व्युत्पत्तिकारको वर्त्तते। सांख्यस्य व्युत्पत्तिविषये लिखितमस्ति।

संख्यायते सम्यग् ज्ञायन्ते येन तत्सांख्यं 'संख्या' शब्दोऽयं संख्या ख्यातिः इत्युभयवचनः। पञ्चविंशतितत्त्वात्मिका संख्या यत्र विविच्यते तदेव सांख्यमिति पञ्चविंशतितत्त्वानां विचारः सांख्यं तमधिकृत्य कृतो ग्रन्थः सांख्यमुच्यते (रामतीर्थमहाचार्य) प्रसंख्यानाय तत्त्वानां समन्तादात्मदर्शने संख्या प्रकुर्वते चैव प्रकृतिं च प्रचक्षते सांख्यै संख्यातसंखेये।

समुपसर्गपूर्वक दर्शनार्थक इत्यस्मात् चक्षिङ्धातो ल्युट्प्रत्यये कृते सति अयं शब्दो निष्पद्यते। ततश्च तस्येदमिति सूत्रेणानि कृते सांख्यशब्दो निष्पद्यते, अतोऽस्य शब्दस्य व्युत्पत्तिलभ्योऽर्थो भवति। गणनायुक्तं गणनया ज्ञातुं योग्यं वा संख्यान्ते गण्यन्ते तत्त्वानि येन तत् सांख्यम्। अमरकोषेऽपि चर्चा संख्या विचारणा इत्युक्तम्। इति सांख्यलक्षणम्। सम्यगात्मबुद्धिस्तां प्राप्तवतां ब्रह्मचर्यादेवकृतसन्धातानां तत्त्वानां वेदान्तविज्ञानसुनिश्चितार्थानां ज्ञानभूमिमारूढानां शुद्धान्तःकरणानां सांख्यानाम्।

सम्यक्ख्यानं तत्त्वज्ञानविवेचनं संख्या या यस्मिन् शास्त्रे वर्तते। तदेव शास्त्रं सांख्यम्भवतीति। शास्त्रस्यास्य तत्त्वज्ञानमेव स्फुटी भवति। इत्यनेन प्रकारेण



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

सांख्यस्य व्युत्पत्तिः स्वीक्रियते। सांख्यदर्शने पञ्चविंशतितत्त्वानां परिगणना ईश्वरकृष्णस्य सांख्यकारिकामुल्लिखितमस्ति।

महामुनि-श्रीकपिलप्रणीतसांख्यदर्शनमिदं सकलन्यायमीमांसाप्रभृति दर्शनेभ्यः चास्त्यतीव प्राचीनमिति च कर्णाकर्णिकया परम्परातः श्रूयते। त्रिगुणात्मिकया जगत्कारणीभूतया प्रकृत्या विरचितत्वादस्य जगतोऽपित्रैगुण्यं सिद्धयति व्यावहारिकञ्चास्ति सांख्यदर्शनमिदमिति नूनं विभावनीयमिति ध्येयम्। व्यवहारेऽप्यस्माभिस्त्रैगुण्यमनुभूयते सांख्यदर्शनमपि तथैवाऽनुभावयति, यतस्तत्कारणीभूतायाः प्रकृतेरपि त्रिगुणात्मकत्वात्।

प्रकृतिश्च सत्त्वरजस्तमसां साम्यावस्थेति च निगद्यते। सैव च पुनः सत्त्व-रजस्तमसां वैषम्यावस्थामापन्ना सती चराचरात्मकं जगदिदं समुत्पादयतीति जगत्कारणीभूता भवतीति भावः।

न्याय-वैशेषिकमतवदत्रापि सांख्यदर्शने चेतनस्य जीवात्मस्थानीयस्य पुरुषस्य बहुत्वं नानात्वञ्च कल्प्यते, इति सा कल्पना महत्येव समीचीना तस्याः सत्तर्कयुक्तत्वात्। अन्यथा एकस्मिन् पुरुषे स्वीक्रियमाणे तस्मिन्नेव विचित्ते सर्वे एव विचित्ताः स्युः, यतस्तस्यैव सर्वशरीरेषु विद्यमानत्वात्। एवमेकस्मिन् वैदुष्यमापन्ने विदुषि सञ्जायमाने सर्वे एव खलु विद्वांसः स्युः।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

एवम्भूतोपर्युक्ताऽऽपत्तिरूपदोषबाहुल्यानुभवादात्मनः पुरुषस्यैकत्वं नैव कदापि स्वीकर्तुं शक्यते, इत्यतः पारिशेष्यात्तस्य बहुत्वमेव कल्प्यताम्। तथोक्तम् - **पुरुषबहुत्वं सिद्धम्।**[1]

इदञ्च सांख्यदर्शनं सेश्वरदर्शन-निरीश्वरदर्शनभेदेन भिन्नं सद् द्विविधं परिगण्यते। अस्मिन् महामुनिपिकलप्रणीते सांख्यदर्शने चेश्वरानङ्गीकारात्तस्य सूत्रे कारिकायां वा नामापि न श्रूयते इतीमे कपिलमतानुयायिनः सांख्याः सन्ति निरीशरवादिन इति।

केवलमेकमात्रं जीवस्थानीयमेकमेव चेतनतत्त्वमभ्युपगम्यते यच्चास्ति पुरुषपदाभिधेयता गतमिति। तदपि तत्त्वं प्रकृतेश्चैतन्याभिमानान्यथानुपपत्त्या कल्प्यते।

इदञ्चास्ति सांख्यदर्शनं सकलभारतीयदर्शनेभ्योऽतीव प्राचीनं दर्शनम्, प्राचीनतमं दर्शनमित्यपि व्याहर्तुं शक्यते इत्यत्र नास्ति लेशतोऽपि विवादः, इति सर्वेऽपि दार्शनिकाः समभ्युपगच्छन्ति।

इदञ्च शास्त्रं प्रकृति-पुरुष-तत्संयोगानाञ्च नित्यत्वप्रतिपादनपरं सत् तदतिरिक्तस्य सर्वस्यापि अनित्यत्वं प्रतिपादयतीति द्वैतभेदप्रतिपादकम् अस्ति।

प्रकृतिश्च सत्त्व-रजस्तमसां साम्यावस्थेति गीयते सांख्यशास्त्रविचारकैः। अस्या एव प्रकृतेर्गुणत्रयाणां वैषम्यावस्था जगदुत्पत्तिकारणं भवति। इदञ्च सांख्यदर्शनं सर्वथा चास्ति निरीश्वरवादिदर्शनम्। यतः पुरुषस्य चेतनतत्त्वस्य

1 सां. का. 16



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

जीवात्मस्थानीयत्वेनाऽङ्गीकारात् तत्रे श्वरस्य जन्मिनां हेतुत्वेनाऽनङ्गीकाराच्च। प्रकृतिपुरुषयोः संयोगस्यैव जगदुत्पादकत्वं स्वीक्रियते।

**'द्यावाभूमि जनयन् देव· एकः विश्वस्य कर्ता भुवनस्य गोप्ता।'**[2]

इत्याद्यागमद्वारा विश्वकर्तृत्वेन भुवनगोप्तृत्वेनेश्वरस्य कृते मान्यतां प्रदत्तवन्तौ नैयायिकवैशिषिकौ। परन्तु सांख्यस्तन्नाऽङ्गीकरोति।

नैयायिकवैशेषिका यथा जीवस्य प्रतिशरीरं भिन्नत्वेनास्तित्वमभ्युपगच्छन्ति, तथैव सांख्या अपि जीवात्मस्थानीयस्य पुरुषस्य नानात्वम् (अनेकत्वम्), बहुत्वम् अङ्गीकुर्वन्ति। यथोक्तवान् ईश्वरकृष्णः - **'पुरुषबहुत्वम् सिद्धम्'**[3] बहुत्वकल्पना नेयं काचन विलक्षण-कल्पना, यत् ऐक्ये स्वीक्रियमाणे 'एकस्मिन् जायमाने सर्वे जायरेन्, एकस्मिन् म्रियमाणे च सर्वे म्रियरेन'। इत्याद्यापत्तयः समागमिष्यन्तीति विचार्य तस्य पुरुषस्य नानात्वं (बहुत्वम्) स्वीकृतवान् सांख्यः। एवं नैयायिकादयोऽपि सांख्यपुरुषस्थानीयस्य जीवात्मनो नानात्वमङ्गीकृतवन्तः।

प्रकृतिपुरुषयोर्भेदाग्रह एव पुरुषबन्धनहेतु तयोर्भेदग्रहश्च बन्धनिवृत्तिरूपमोक्ष-हेतुश्चास्तीति सर्वेऽपि सांख्याः समभ्युपगच्छन्ति।

महामुनिः श्रीकपिल ई.पू. 2000 तमे वर्षे स्वास्तित्वं लभमानः सांख्याशास्त्रं रचितवान्। तत्रापि सांख्यादर्शनस्य सूत्रद्वयं समुपलब्धमस्तीत्यापि श्रूयते।

---

2 न्या. सि. मु. ईश्वरसिद्धिप्रकरणे

3 सां. का. 16



CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

एतेषां मुनिश्रीकपिलमहोदयानां प्रथमशिष्य आसुरिरासीदिति कर्णा-कर्णिकया श्रूयते। अस्य च मुनेरासुरेनेहि कोऽपि ग्रन्थः समुपलभ्यते, वचनानि त्ववश्यमेव ग्रन्थान्तरेषूपलभ्यन्ते।

अस्य चाऽऽसुरिमुनेः शिष्यः श्रीपञ्चशिखाचार्य आसीत्। श्रूयते यदस्य पञ्चशिखाचार्यस्य मुनेः केवलमेक एव स्वयं लिखितः 'षष्टितन्त्र' नामको ग्रन्थः स्वास्तित्वसम्पन्नः पूर्वाकालावच्छेदेन श्रूयते। परन्तु सोऽप्यधुना नोपलभ्यते इत्यस्ति महत्खेदास्पदीभूतोऽयं विषयः।

तथा चोक्तं महाभारते मोक्षधर्मे -

**'सांख्यस्य प्रवक्ता कपिलः परमर्षिः पुरातनः।'**[4]

तथोपलब्धि गता ये सन्ति सांख्यदर्शनसम्बन्धिनो ग्रन्थास्तेषु निम्नोल्लिखिता एव ग्रन्थाः समुपलभ्यन्ते। तथाहि-

1. 'सांख्यकारिका' ईश्वरकृष्णरचिता।
2. 'सांख्यतत्त्वकौमुदी' षड्दर्शनाचार्य-श्रीवाचस्पतिमिश्रविरचितष्टीकात्मको ग्रन्थः। यश्चास्ति साक्षात् सांख्यकारिकाया उपरि।
3. 'सांख्यप्रवचनभाष्यम्'।
4. 'सांख्यसार' प्रभृतीन् नानाविधान् ग्रन्थान् श्रीविज्ञानभिक्षुरपि विरचितवान्।

---

4 महाभारतमोक्षधर्मः



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

5. 'सांख्यतत्त्वयाथार्थ्यदीपनम्' टीकास्वरूपं ग्रन्थ सर्वथाः विलिख्य सांख्यशास्त्रसम्बन्धिनो विचारगर्भितान् सिद्धान्तान् प्रचुरान् कृतवान्।

एवं महाविद्वाननिरुद्धोऽपि खलु सांख्यसूत्राणामुपरि टीकास्वरूपां 'वृत्तिम्' विलिख्य सांख्यदर्शनसम्बन्धिनः सिद्धान्तान्-तत्र प्रस्फोरयामास, शास्त्रञ्च विशदीकृतवान्।

6. 'सांख्यसूत्रवृत्तिसारम्' इति ग्रन्थं लिखितवान् सांख्यशास्त्रस्य प्रकाण्डपण्डितो महादेवः।

7. 'लघुसांख्यसूत्रवृत्तिम्' रचितवान् श्रीनागेशोऽप्यमूल्यं ग्रन्थरत्नमिदम्।

8. 'युक्तिपादिकाभाष्यम्' अपि रचितवान् श्रीगौडपादाचार्यः अनेनापि भाष्येण महानेवोपकारो जातः सांख्यशास्त्रस्य।

9. 'सांख्यचन्द्रिका' नाम्नी अपि एका सांख्यदर्शननिष्ठवैशद्यविधायिनी पुस्तिका मिलति श्रीनारायणतीर्थस्य। इयमपि पुस्तिका महतीं प्रसिद्धिं गता सती महदेव महत्त्वं सूचयति सांख्यदर्शनस्येति विदाङ्कुर्वन्तु भवन्तः।

इमे च सांख्यदार्शनिकाः पञ्चविंशति संख्याकान् तत्त्वान् समभ्युपगच्छन्ति। ते च तत्त्वभूताः प्रभूताः सन्ति पदार्थाः-

1. 'प्रकृतिः' इत्येकं तत्त्वम्।
2. 'महत्तत्वम्' इति च द्वितीयं तत्त्वम्।
3. 'अंहङ्कारः' इति च तृतीयं तत्त्वम्
4. 'पञ्चज्ञानेन्द्रियम्'।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

5. 'पञ्चकर्मेन्द्रियम्'।

6. 'पञ्चतन्मात्राणि'।

7. मनश्चैकं तत्त्वम्।

8. 'पञ्च महाभूतानि' च ।

9. पुरुषश्चैक तत्त्वम्, स च पुरुषः कूटस्थो नित्योऽपरिणामी च।

एवं क्रमेण पञ्चविंशतितत्त्वानि मिलित्वा भवन्ति। तथा चोक्तम्-

**प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः।**

**तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि'।।[5]**

एतेषां प्राङ्निरूपितानां पञ्चविंशति-तत्त्वानां साधकानि सन्ति सांख्यनये त्रीणि प्रमाणानि। तथाहि-

**'दृष्टमनुमानमाप्तवचनञ्च सर्वप्रमाणसिद्धत्वात्।**

**त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि'।।[6]**

1. 'दृष्टम्'- प्रत्यक्षं प्रमाणम्।

2. 'अनुमानञ्च' द्वितीयं प्रमाणम्।

3. 'आप्तवचनञ्चेति' तृतीयं प्रमाणम्।

---

5 सां. का. 22

6 सां. का. 4



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

अत्र कार्यकारणभावे जायमाने चतुर्धा विप्रतिपत्तिर्जायते। असतः सज्जायते इति च बौद्धाः समुद्गिरन्ति।

नैयायिकप्रभृतयो दार्शनिकाः सतोऽसज्जायते इति च वदन्ति।

अद्वैतवादिनो वेदान्तिनश्च सतोऽसज्जायते, अर्थात् सतो ब्रह्मणो विवर्तः कार्यजातं न वस्तु सत् इति वदति।

सांख्यास्तु पुनः सतः कारणात् सदेव कार्य जायते। इति कारणमपि सत् कार्यमपि च सदेवेति विज्ञेयम्।

इमे सांख्याचार्याः पञ्चभिर्हेतुभिः सदेव कार्य साधयन्ति। तथाहि-

**असदकरणापादुपादानग्रहाणात् सर्वसम्भवाभावात्।**

**शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्।।**[7]

**अर्थात् कार्यत्वावच्छिन्नं पक्षीकृत्य -**

कार्य सत् असदकरणात्, उपादानग्रहणात् इत्यादिक्रमेण पञ्चभिर्हेतुभिः। सत्त्वं साधनीयम् इति।

## सांख्यदर्शनस्य प्राचीनत्वम्

प्रायः सर्वेषामेव संस्कृतग्रन्थानां कालनिर्णयः कठिनः। यतो हि तदानीन्तनैः शास्त्रकृद्भिः कालविषयोल्लेखः प्रायशो नैव कृतः। अतः आधुनिकैः खिस्ताब्दाधारेण भगवतो गौतमबुद्धस्य कालाधारेण वा शास्त्राणामन्यविषयाणाञ्च

7 सां. का. 9



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

पौर्वापर्यनिर्धारणं क्रियते। इदं तावदैतिहासिकानां सुनिश्चितमतमस्ति यद् वेदाः उपनिषदश्च गौतमबुद्धपूर्वकालेऽभवन्। उपनिषत्सु कुत्रचित् साक्षात् कुत्रचिच्च परम्पराया सांख्यतत्त्वानां समुल्लेख समासाद्यते।

कठोपनिषदि -

**महतः परमव्यक्तमव्यक्तात्पुरुषः परः।**
**पुरुषान्न परं किञ्चिद् सा काष्ठा सा परा गतिः।।**[8]

मन्त्रेऽस्मिन् सांख्यदर्शनस्य बीजं दृग्गोचरं भवति। एवमेव श्वेताश्वेतरोपनिषदि सकपिलं सांख्योल्लेखो वर्त्तते। एतेन सांख्यदर्शनस्य प्राचीनत्वं बुद्धपूर्वभवत्वञ्च सुतरां प्रमाणितं भवति।

सांख्यदर्शनस्य प्राचीनत्व इतोऽपि महत्त्वपूर्णं प्रमाणमस्ति गौतमबुद्धस्याराऽकलामस्य (तत्कालीनप्रसिद्धसांख्याचार्यस्य) आश्रमगमनं तस्मादुपदेशश्रवणञ्च। एतच्च प्रथमशताब्द्यां समुत्पन्नेनाश्वघोषेण कविना स्वकीयबौद्धचरितमहाकाव्ये सविस्तरं प्रतिपादितम्। गौतमस्याराऽकलामस्याश्रमगमनं तत्रेत्थं वर्णितम्-

**ततः समविहारस्य मुनेरिक्ष्वाकुचन्द्रमाः।**
**अराऽस्याश्रं भेजे वपुषा पूरयन्निव।।**[9]

---

8 कठोपनिषद् 3/11

9 बुद्धचरितम् 12/9



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

आश्रमं सम्प्राप्याभिवादनादिशिष्टाचारानन्तरं शान्तभावेन गौतमः स्वागमन-प्रयोजनं निवेदयामास तदनुज्ञाञ्चाधिगम्य प्रश्नानिमान् पप्रच्छ-

**दिदृक्षुरिव हि ज्योतिः पिपासुखदैशिकम्।**
**त्वद्दर्शनमहं मन्ये तितीर्षुरिव च प्लवम्।।**
**तस्मादर्हसि तद्वक्तुं वक्तव्यं तव मन्यसे।**
**जरामरणरोगेभ्यो यथायं परिमुच्यते।।**[10]

एतत्प्रश्नान्तरमृषि कथ्यते यत्किञ्चिदप्युपदिशति तदविकलं सांख्यदर्शनम् एव। नास्त्यत्र सन्देहस्यावसरः। तत्र न केवलं सांख्यदर्शनसिद्धान्ता एव प्रतिपादिताः अपितु कपिलमुनिरपि स्मृतः। यथाहि-

**सशिष्यः कपिलश्चेह प्रतिबुद्ध इति स्मृतः।**
**सपुत्रः प्रतिबुद्धस्तु प्रजापतिरिहोच्यते।।**[11]

इत्थं बुद्धिचरितस्य द्वादशे सर्गे सांख्यदर्शनस्य परिपुष्टं बीजं समासाद्यते। एतेनास्य दर्शनस्यान्यदर्शनेभ्यः प्राचीनत्वं सुतरां सिध्यति। सांख्यदर्शनस्य मूलमुद्देश्यमस्ति दुःखत्रयसंतप्तजनदुःखनिवृत्तिः, दुःखनिवृत्तिश्च प्रकृतिपुरुषविवेक-ज्ञानेन जायते इति सांख्यदर्शनात्मकेनोपदेशेन गौतमस्य सन्तोषः सन्देहनिवृत्तिर्वा न जातः। अतः सः बहुष्वन्येष्वप्याश्रमेषु बभ्राम। अन्ते च ध्यानबलेन स्वाभीष्टमास-

10 बुद्धचरितम् 12/14
11 तत्रैव 21



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

सादः। ततश्च तेन स्वसाक्षात्कृतसत्यस्य उपदेशः समारब्धः। महदाश्चर्यस्यायं विषयोऽस्ति यत् गौतमेनोपदिष्टानि चत्वार्यार्यसत्यानि दुःखस्वरूपमूलकान्येवासन् अत्र गौतमे कपिलदर्शनस्य मनाक् प्रभावोऽवश्यमेवाभवदिति वक्तुं शक्यते। अत्रेदमपि चिन्त्यं यत् कालक्रमेण पूर्ववर्तिनां परवर्तिषु अभावो भवत्येव।

एतेन स्व-स्वसम्प्रदायस्य उत्कर्षापकर्षको नैव चिन्तनीयौ, काल प्रभावोऽयमिति मत्वैतिहासिकानुशीलने संलग्ना भवन्तु साम्प्रदायिकाश्च वेदेषूप-निषत्सु बौद्धदर्शने स्मृतीतिहासपुराणमहाभारतादिषु सांख्यदर्शनस्योल्लेखः प्राशस्त्येन विलोक्यते। एतेन सांख्यदर्शनस्य प्राचीनत्वं सुतरां सिद्ध्यतीति।

**आचार्यपरम्परा (सांख्यपरम्परानिर्देशनम्)**

भारतीयजीवने दर्शनस्यातीव समुद्धतरोपयोगिता वर्त्तते। भारतीयाः संस्कृतेरितिहासः वस्तुतोऽत्र भारतीयदर्शनेतिहासस्य सविपुलं स्वरूपमस्ति। विचाराणान्नूतनमेधाः नैकधाऽस्मिन् लोके समागताः विचाराणां रसमदनिर्झराः एव दर्शनमासीत्। एतादृशाः निर्झरारचस्यां भूमौ सहस्रकालपर्यन्तं नैकेषु भागेषु निर्झरिताः किन्तु सर्वत्रैव कर्मणां पृष्ठे नित्यमेवैका दार्शनिकी पृष्ठभूमिर्भवति। एकस्मिन् काले वेदानां प्रमाणवादः भारतीयविचाराकाशस्यध्रुवनक्षत्रस्यासीत्। येन नित्यमेवाऽस्माकं देशस्य दर्शनमध्यात्मप्रकाशेन प्रकाशितं वर्तते। यस्मिन् काले दर्शनक्षेत्रेषु विभिन्नानि मतानि समुद्भूतानि। न तत्समये सांख्यशास्त्रस्य जन्माभूत्। अपि तु सर्वतः



CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

पूर्वसांख्यशास्त्रस्यमेव सर्वत्र प्रसूतम्। यच्छास्त्रे प्रकृतेः सृष्टिप्रक्रियायाश्च व्याख्या सुविस्तृता।

एवञ्च प्रकृतिपुरुषयोर्मध्ये यदवैषम्यं वर्तते तस्यापि सम्यक्रूपेण समाधानङ्कृतम्। सांख्यदर्शनस्याऽऽचार्यपरम्परायां सर्वप्रथमं भगवान् कपिलोऽस्य शास्त्रस्य मूलप्रवर्तकरूपेण सर्वोपरि सुविद्यमाने वर्तते। यतः -

**संख्या प्रकुर्वते चैव प्रकृतिञ्च प्रचक्षते।**

**तत्त्वानि च चतुर्विंशत् तेन सांख्याः प्रकीर्तिताः।।**

अर्थात् ये प्रकृतिं विवेचयन्ति चतुर्विंशतितत्त्वानि निरूपयन्ति, एवञ्च ये सांख्यामर्थात् ज्ञानमुपदिशन्ति, त एव सांख्यशास्त्रस्य प्रवर्तकाः सन्ति।

**दर्शनशास्त्रस्य प्रकाराः**

1. वैदिक (आस्तिक) दर्शनानि षट् - (क) न्यायदर्शनम् (ख) वैशेषिक- दर्शनम् (ग) सांख्यदर्शनम् (घ) योगदर्शनम् (ङ) पूर्वमीमांसादर्शनम् (च) उत्तरमीमांसादर्शनम्।
2. अवैदिक (नास्तिक) दर्शनानि त्रीणि - (छ) चार्वाकदर्शनम् (ज) बौद्ध- दर्शनम् (झ) जैनदर्शनम् (नास्तिको वेदनिन्दकः, ते मन्यन्ते - 'त्रयो वेदस्य कर्त्तारो भण्ड-धूर्त-निशाचराः)।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

(क) न्यायदर्शनम्

**प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।**

**आश्रयः सर्वधर्माणां विद्योद्देश प्रकीर्तिता।।**

अपि च -

**आर्ष धर्मोपदेशञ्च वेदशास्त्रविरोधिना।**

**यस्तर्केणानुसन्धत्ते स धर्म वेद नेतरः।।**

एवं तुरीयपुरुषार्थमोक्षप्रकरणेऽपीत्थमुक्तवन्तः-

**तत्रोपनिषदं तात परिशेषन्तु पार्थिव।**

**मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं पराम्।।**

अपि च वात्स्यायनो ब्रूते- 'प्रत्याक्षगमाथितमनुमानमन्वीक्षा, प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा, तया प्रवर्तते इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रम्। यत्पुनरमानं प्रत्यक्षागमविरूद्धं न्यायभासः स'।[12]

न्यायस्तु प्रागर्दिशतव्युत्पत्तिदिशा बन्धननिवृत्तिरूपः सिद्धयति। एव स्थिते न्यायविषये इदं प्राचीनाचार्यकथनमपि साधु सङ्गच्छते। तथाहि-

**यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्।**

**अपन्थानन्तु गच्छन्तं सोदरोऽपि विमुञ्चति।।**

12 वात्स्यायनभाष्यसूत्रम् ।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

अस्य न्यायशास्त्रस्य-न्यायदर्शनस्य, आन्वीक्षिकीविद्याया वा जन्मदाता श्रीमहार्षिर्गोतम आसीत्। अयञ्च महार्षिर्गोत्तमः खलु त्रेताकालीनः प्रजापतेः श्रीआङ्गिरसः प्रपौत्रो दीर्घतमस पुत्रो महातपस्वी आदिन्याशास्त्रप्रणेता चाऽऽसीत्।

अस्य जन्मभूमिर्हिमालयो नाम नगाधिराजः श्रूयते। तत्रैव चायं महानुभावः कठिनतमां तपश्चर्यां च कुर्वाण आसीत्।

अस्य पत्नी परमां प्रसिद्धिं गता श्री 'अहल्या' नाम्नी अतीव सुप्रसिद्धाऽऽसीत्। इयञ्चाऽहल्येति नाम्ना सुप्रसिद्धिं गता महर्षेः पत्नी स्वीयपत्युर्महर्षेर्गोतमस्याऽभिशापेन पाषाणमयी शिला जाता।

तदनन्तरकालावच्छेदेन सच्चिानन्दास्याऽऽनन्दकन्दस्याऽयोध्याचन्द्रस्य श्रीरामचन्द्रस्य मर्यादापुरुषोत्तमस्य पादपांसुभिस्तत्स्पर्शेन वा विधूतपापा सती सर्वथा विमुक्तशापा साऽभूदिति सर्वेऽपि दार्शनिकास्तदतिरिक्ताश्च विद्वांसो विदाङ्कुर्वन्ति, दिव्यञ्च शरीरं पुनर्दधौ, महर्षेः सद्भावनाभावितान्तःकरणे ततोऽप्यधिकं, सम्मानं प्राप्तवतीत्ययमस्तीतिहासः। अस्य च महर्षेर्गोतमस्य साक्षादात्मजः शतानन्दो मिथिलेश्वरस्य महाराजस्य पुरोहितोऽयमासीदित्यापि श्रूयते। तदत्र युक्तायुक्तत्वे स्वयमेव विचारणीये।

अयञ्चाऽऽदिन्यायशास्त्रविनिर्मिता महार्षिर्गोतमः अष्टाशपुराणानां ब्रह्म-सूत्राणाञ्च विनिर्मातुः श्रीव्यासस्य समकालीन आसीत्, गुरूशिष्यपरम्परापि च श्रूयते इत्यपि केचन वदन्ति।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

अस्ति चेयं किम्वदन्ती यद्-वेदव्यासो गोतमस्य शिष्य आसीत्। एतेन शिष्टापरिग्रहा व्याख्याता:।[13]

इति सूत्रेण न्यायसूत्रकारमते परासिते गोतम उवाच-नाऽहमेनं शिष्याधमं शिष्यं व्यासं चाक्षुषप्रत्यक्षविषयीभूतं करोमि। एतच्छ्रुत्वा भगवान् वेदव्यासो गुरोर्हृदि प्रसन्नतां सम्पादनाय तेषां पादयोः पपात। ततश्च शिष्यनिरूपितसद्भावितान्त:करणो गुरुर्गोतमो योगशक्तिबलात् स्वीये पादे चक्षुर्जनयाया तेन च चक्षुषा महर्षिः स्वीयं शिष्यं व्यास समवलोकितवान्। अत एव गोतमस्याऽपरं नाम अक्षपादोऽपि जात:।

न्यायशास्त्रमतिप्राचीनम्, अस्य प्रवर्तकः सूत्रकार गौतमः 500 ई. पू. समयेऽजायत। गौतमप्रणीतं न्यायशास्त्रं पदार्थमीमांसाशास्त्रम्। षोडशपदार्थाश्चाभ्युपगताः प्रमाणप्रमेयाद्याः। वात्स्यायनस्योदयकालो ब्राह्मणधर्म- बौधधर्मयोः सङ्घर्षस्य समयः आसीत्। वाचस्पतिमिश्रन्यायवार्तिकतात्पर्ये तदीयमपि मतं विस्तारेण जग्राह। उदयनोऽपि 'न्यायवार्तिकतात्पर्यपरिशुद्धि' नामकेन व्याख्याग्रन्थेन वाचस्पतेर्ग्रन्थं परिष्कृतवान्। तत्र प्रमाणप्रमेयसंशय- प्रयोजनदृष्टान्तसिद्धान्तावयवतर्क-निर्णयवाद-जल्पवितण्डाहेत्वाभासच्छल-जातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति तत्सिद्धान्तः। वैशेषिकस्य समानतन्त्रत्वात् परमाणुकारणतावादोऽस्य विशिष्यध्यानमाकर्षति दार्शनिकानाम्। सुखदु:खात्मकमनोवृत्त्योर्नाशे जाते मनः साम्यावस्थां प्रतिपाद्यते। तदा आत्यन्तिकदु:खनिवृत्तिर्भवति, सेवामुक्तिः।

13 ब्रह्मसूत्रम् 2/1/12



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

ईश्वरोऽनुमानगम्यः। जीवन्मुक्तिरपरनिःश्रेयसशब्देन विदेहमुक्तिश्च परनिःश्रेयसशब्देन प्रतिपाद्यते।

## (ख) वैशेषिकदर्शनम्

'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः' इत्यस्मिन् वाक्ये घटकीभूतं 'न्यायविस्तरं-पदं महर्षिकणादविरचितप्राचीनन्याय-वैशेषिकदर्शनपरम्।

'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्' इत्यात्रापि घटकीभूतं 'काणाद'-पदं सुस्पष्टतयैव वैशेषिकदर्शनमेव बोधयति।

जन्मदातृत्वेन कणादेन पित्रा पालितं लालितं पुत्रवच्च परिवर्धितं वैशेषिकदर्शनमिदं काणाददर्शनमित्यप्युच्यते। सकलेभ्यो दर्शनेभ्योऽतीव श्रेष्ठमतीव प्राचीनतमञ्चेति सर्वशास्त्रोपकारमपि-'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्' इत्युक्तं प्रागेव। इत्थञ्चानेन प्राचीनाचार्यचरणवचसाऽस्य प्राचीनत्वं सर्वशास्त्रोपकारत्वञ्च सुस्पष्टमेवाऽनुभवेनापि सिद्ध्यति।

अत्र वयं ब्रूमः - शास्त्रं द्विविधम्-

1. 'पदशास्त्रम्'।
2. 'पदार्थशास्त्रञ्चेति। तत्र पदशास्त्रं व्याकरणशास्त्रम्, पदार्थशास्त्रञ्च कणादशास्त्रम् (वैशषिकदर्शनम्)। अन्येषामपि शास्त्राणां विद्यमानत्वेऽपि अनयोर्द्वयोः शास्त्रयोः समक्षं नास्ति तादृशमपेक्षितं वैशिष्ट्यमन्येषां शास्त्राणाम्। यतः सर्वतः प्राग् वैशेषिका पदार्थोल्लेखनमेव प्रकुर्वन्ति। यथा-



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

**'द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम्।**

**समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः'।।**[14]

**तत्राऽन्नम्भट्टोऽप्याह-**

'द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाऽभावाः सप्त पदार्थाः'।[15]

इदमेव च कणादशास्त्रम् (वैशेषिकदर्शनम्) औलुक्यदशनमपि निगद्यते।

अस्मिन् दर्शने विशेषपदार्थस्याऽङ्गीकारेण अन्यत्र क्वापि च दर्शनेषु तदनङ्गीकारेण 'विशेषस्तु विशेषवान्' इति न्यायेन चाऽन्यदर्शनेभ्योऽस्य वैशेषिकदर्शनस्य महदेव वैशिष्ट्यं समागच्छति।

प्रमाणानां गणनावसरे प्रत्यक्षमनुमानञ्चेति प्रमाणद्वयमेव चाङ्गीकरोति वैशिषिक दर्शनस्य कृते जन्मदाता महर्षिः कणादः। यथोक्तम् -

**'शब्दोपमानयोनैव पृथक् प्रामाण्यमिष्यते।**

**अनुमानगतार्थत्वादिति वैशेषिकं मतम्।।'**

इत्यनेन खलु शब्दस्य स्वातन्त्र्येण प्रामाण्यं निरस्य तस्याऽनुमानविधयैव प्रामाण्यमभ्युपेयम्। बौद्धप्रभृतयोऽपि दार्शनिका उक्तस्यैव प्रमाणद्वयस्य प्रामाण्यमभ्युपगच्छन्तीत्यत्र प्रमाणविषयमधिकृत्योभयत्र साम्यमेवानुभूयते मया शशिबालागौडेन।

---

14 भाषापरिच्छेद कारिका ।

15 तर्कसंग्रहः



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

वैशेषिकदर्शनतः पश्चात्कालीनेन न्यायदर्शनेन सहास्य कणाददर्शनस्य प्रायः आधिक्येन साम्यत्वसम्भवेऽपि आंशिकस्तु क्वाचित्को भेदोऽस्त्येव। यथा-

**'विभागे च विभागजे।' 'यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदुः''।।**[16]

विभागजविभाग इति च संयोगजसंयोगस्याप्युपलक्षणम्।

पदार्थानां विषयेऽपीदमस्ति यत् नैयायिकानां ये सन्ति प्रमाण-प्रमेयादयः षोडशपदार्थास्तेषां वैशेषिकाभिमतसप्तस्वेव पदार्थेष्वन्तर्भावो बोध्य इत्येव परमार्थः।

बौद्धानां वेदान्तिभिः सह प्राय एकवाक्यतायाः सत्त्वेऽपि वैशेषिकैः सह सर्वथा चास्ति विरोधः सर्वांशे केवलं प्रमाणविषयं तथा अतिरिक्ताऽवयविविचारात्मकं विषयं विहायेति बोध्यम्।

एतत्प्रणेता कणादः कश्यपवंशोत्पन्नतया काश्यपशब्देनोक्तः। विशेषपदार्थ-स्वीकारमूलकमेवास्य दर्शनस्य वैशेषिकमिति नामकरणम्। वैशेषिके त्रयो हेत्वाभासाः स्वीकृताः। दश अध्यायैः 370 सूत्रैश्च निबद्धमिदं दर्शनम्।

1. प्रथमाऽध्याये समवेताशेषपदार्थकथनम्
2. द्वितीये द्रष्टव्यम्
3. तृतीये आत्मान्तः करणनिरूपणम्
4. चतुर्थे शरीरभेदनिरूपणम्
5. पञ्चमे कर्मनिरूपणम्

16. न्या. सि. मु. विलासिनीटीका



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

6. षष्ठे श्रौतधर्मनिर्वचनम्

7. सप्तमे गुणसमवायौ

8. ज्ञानोत्पत्ति–तन्निदाने।

नवमे–प्रागभावादिनिरूपणम्, दशमे–आत्मगुणनिरूपणञ्च। इदं दर्शनं सर्वशास्त्रोपकारकम्। अत्र दर्शने सर्वप्राचीनो ग्रन्थः सूत्रं रावण प्रणीतम्, यन्नोपलभ्यते। तदनन्तरं भारद्वाजवृत्तिः, प्रशस्तपादभाष्यम्, शङ्करमिश्रस्योपस्कारः। जगनारायणभट्टस्य कणाद सूत्रवृत्तिः चन्द्रकान्तभट्टस्य वैशेषिकभाष्यञ्च। आदिमं सूत्रं – 'धर्मविशेषप्रसूतात् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यं वैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसाधिगमः।' अस्मिन् दर्शने परमात्मा तु ईश्वरापरनामा जीवात्मनो भिन्न एव। तत्त्वज्ञानेन मिथ्यावासनायां निवर्तितायां रागाभावात् प्रवृत्त्यभावे कर्माभावात् सुखदुःखापगमः, स एव च मोक्ष इति शास्त्रस्यास्य तत्त्वम्।

### (ग) सांख्य–दर्शनम्

सांख्यदर्शनस्याद्य आचार्यः कपिलः, सिद्धान्तस्तु प्रकृतिः पुरुषश्चेति द्वे मूलतत्त्वे, अनयोरेव सम्बन्धाज्जगदुत्पद्यते। प्रकृतिर्जडा, पुरुषश्चेतनः, पुरुष–सम्बन्धात्प्रकृतौ क्रिया। सत्कार्यवादोऽत्र मते पञ्चविंशतिस्तत्त्वानि–1. मूल–प्रकृतिः, 2. महान्, 3. अहङ्कारः, 4. रूप, 5. रस, 6. शब्द, 7. स्पर्श, 8. गन्ध इति पञ्चतन्मात्राणि तथा च पञ्चकर्मेन्द्रियाणि, पञ्चज्ञानेन्द्रियाणि, एकं मनः



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

8+11=19, पञ्चमहाभूतानि-क्षिति, जल, पावक, गमन, समीर, 19+5=24, 25 पुरुषश्चेति वर्त्तते।

## (घ) योगदर्शनम्

इदं दर्शनं सेश्वरसांख्यदर्शनमुप्युच्यते। इतः पूर्वे निरूप्यमाणस्य सांख्यदर्शनस्य निरीश्वरवादिदर्शनत्वात्। अस्मिन् योगदर्शने योगस्यैव प्राधान्यमनुभूयते। योगश्चास्ति – 'चित्तवृत्तिनिरोधः' इति।

अर्थात् चित्तस्य (मनसः अन्तःकरणस्य) वृत्तेः सर्वतोभावेन निरोधः (अवरोध) एव योगः। इदमेव खलु दर्शनं प्राधान्येन भारतस्य भारतीयतायाः प्रकाशको विस्तारको ग्राहकोऽनुग्राहकश्चेति वेदितव्यम्।

तात्त्विकदृष्ट्या विचार्यमाणे इदमेव खलु दर्शनञ्चास्ति प्राधान्येन भारतवर्षस्याऽऽध्यात्मिकोन्नतेः परम्परया साधनतावच्छेदकत्वेन कारणतावच्छेकं, तदवच्छेदकं वेति विज्ञेयम्।

सर्वैरेव खल्वास्तिक-नास्तिकप्रभृतिदार्शनिकैरस्य योगदर्शनघटकीभूतस्य योगस्योपयोगो विधीयते, उपयोगिता वा सम्पाद्यते। अधुनापि वर्तमाने विकराले कलिकालेऽस्य योगस्योपयोगं विदधानश्चास्ति महेशयोगी महात्मा, यश्च भावातीतध्यानपूर्णात्मकयोगाङ्गभूत-समाधिं समुपदिशति, देशे विदेशे प्रचारयति, अग्रे प्रसारयति विस्तारयति च योगम्।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

'योगः कर्मसु कौशलम्'-गीता।

'योगस्थः कुरु कर्माणि'-गीता।

इति प्राचीनाचार्यचरणोक्तदिशा योगस्य महत्त्वं तत्त्वं वा बुद्धिगुहायां सन्निविष्टं सद् विज्ञायते।

अस्य योगस्य क्रियात्मको भागोऽतीवजटिलः कठिनो दुष्करोऽपि सन् सर्वैरेव दार्शनिकैर्बुद्धिगुहायां सन्निविष्टं तदीयं महत्त्वं स्वीक्रियते गीयते समाद्रियते चेति विज्ञेयम्। यत आत्मज्ञानोपयोगित्वेनाऽङ्गीकृतस्य निदीध्यासनस्य सम्पादकत्वेन समपेक्षितानां यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधीनां योगेनैव सम्भवो भवितुमर्हति नान्यथेति योगस्य तदीयमहत्त्वस्य च सर्वदार्शनिकसाधारणत्वमवगम्यते। तत्रापि ज्ञानांशमधिकृत्य सांख्यदर्शनस्यैव चास्ति साम्यमित्यवधेयम्।

अस्य योगदर्शनस्य प्रमाणादीनां प्रमेयादिपदार्थानाञ्च विचारचर्चा सांख्यदर्शनतुल्यैव मन्तव्येति परन्तु तथापि योगर्शने ईश्वरस्याऽङ्गीक्रियमाण्त्वेन तत्साक्षात्कारर्थं यम-नियम-प्रभृतयोऽष्टौ योगाङ्गा अपेक्ष्यन्ते एतावांस्तु विशेषः अन्यत् सर्व समानमेवेति ध्येयम्।

केचन दार्शनिका विद्वांसोऽस्य सांख्यदर्शनस्य सेश्वरनिरीश्वरभेदेन द्विधा विभज्य तान्निरूप्यन्ति। अत एव योगदर्शघटकीभूतं 'योगम्' 'योगाश्चित्तवृत्तिनिरोधः' इति सूत्रेण वर्णयन्ति। महाभारतेऽप्युक्तम्-



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

**'हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः।'**[17]

इत्यस्माद्-महाभारतवचनाच्च हिरण्यगर्भस्य योगवक्तृत्वं अन्यस्य चेतनतत्त्वस्य व्यक्तिविशेषस्य योगनिषेधकर्तृत्वं योगदर्शनस्य पुरातनत्वञ्च सिद्ध्यति, तथा योगदर्शनस्य हिरण्यगर्भ एवास्ति। खलु प्राथमिकस्तावदाचार्य इति चाऽर्थत एवाऽऽयाति। अपि च याज्ञवल्क्योऽपि योगशास्त्रवेत्तृषु चास्ति प्राथम्येन परिगणित इत्यपि नूनं विदाङ्कुर्वन्तु वेत्तारः।

अस्य प्रवर्त्तकः महर्षिपतञ्जलिः, योगदर्शनम् प्राचीनदर्शनम्, नानासिद्धीनां जनकमित्यत्रापि च नास्ति विवादः। इदं योगदर्शनं पादचतुष्टयात्मकम्। यथा-

1. प्रथमे पादे - योगस्वरूपस्य विस्तृतं निरूपणम्।
2. द्वितीयपादे - क्रियायोगः तत्साधनानि यमादीनि च।
3. तृतीयपादे - अन्तरङ्गं साधनजातं ध्यानधारणासमाधिरूपं संयमपदव्यपदेश्यम्
4. चतुर्थे च पादे - जन्मौषधि मन्त्रतपः समाधिजसिद्धिपञ्चकं, तत्सम्बद्धं कैवल्यरूपं परमप्रयोजनं च निरूपितम्। षड्विंशतिस्तत्त्वानि सांख्यस्य 25 + ईश्वरः = 26। स चायमीश्वरः - 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः।'

17 महाभारते मोक्षधर्मः



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

## (ङ) पूर्वमीमांसा-दर्शनम्

मीमांसादर्शनं पूर्वोत्तरमीमांसाभेदेन चास्ति भिन्नं द्विविधञ्च। तत्र पूर्वमीमांसादर्शनञ्चास्ति खलु जैमिनिमुनिना प्रणीतम्। उत्तरमीमांसा ज्ञानकाण्डस्वरूपां रचितवान् चिरजीवनसम्पत्तिमान् भगवान् व्यासः।

तत्र वेदान्तर्गतयज्ञयागादिस्वरूपकर्मकाण्डसम्बन्धे स्वास्तित्वेन समुपस्थितानां विरोधिवचननिचयस्वरूपाणां वाक्यानां समन्वयात्मिक्या दृष्ट्या चास्यैकवाक्यता संस्थापनमेवाऽस्य दर्शनस्य मुख्यमुद्देश्यम्।

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।"[18]

इति चास्ति कर्ममार्गप्रदर्शकमिदं पूर्वमीमांसादर्शनसम्बन्धावच्छिन्नं सर्वथाऽविच्छिन्नं मन्त्रात्मकं वाक्यम्।

अस्मिन् मते कर्मण एवाऽभ्युदयानिःश्रेयसयोः समवाप्तिजनकत्वेन तस्यैव प्राधान्येन सर्वतोभावेन च निरूपणयत्वमवगम्यते। कर्मणा समुत्पन्नं धर्माऽधर्मापर-पर्यायभूतपूर्वमेव साक्षात् कर्मजन्सनफलजनकं भवतीति निर्विवादितमिदं विषयजातम्।

विचारस्यास्य सर्वत्रैव पूर्वमीमीसांदर्शनग्रन्थेषु निरूपणीयत्वेन विशेषतोऽयं विचारः सर्वप्राथम्येनाऽस्माभिस्तत्रैवाऽनुभूतो दृष्टिपथे स्मृतिपथे न नीयते। अयञ्च

---

18 ईशोपनिषद् 2



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

खलु मीमांसाशब्दोल्लेखोऽपि संहिताब्राह्मणग्रन्थेष्वेव मिलतीत्यपि न तिरोहितमस्ति केषामपि पूर्वमीमांसाविदुषाम्।

मीमांसायाश्चर्चा वेदस्य संहितायामुपनिषदि ब्राह्मणग्रन्थेषु च प्राप्यते। कुमारिलभट्टः श्लोकवार्तिके 'धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्' इति। वारदायणेन कर्मफलदातेश्वरो मन्यते। जैमिनिना कर्मण एव फलदातृत्वं प्रदर्शितम्। अत एव मीमांसका निरीश्वरवादिनो सिध्यन्ते। जैमिनिना 700 ई. पूर्वसमये मीमांसासूत्राणि प्रणीतानि। कुमारिलात् परतोजातः मण्डनमिश्रो विधिविवेकभावना विवेक विभ्रमविवेकादीन् ग्रन्थान् जग्रन्थ। विधिविवेकस्य टीका वाचस्पतिमिश्रेण न्यायकणिका नाम्ना कृता। प्रभाकरेण 'बृहती' नामकेन भाष्यव्याख्याग्रन्थेन स्वसिद्धान्तः प्रचारितः। गङ्गेशोपाध्यायेन न्यायतत्त्वचिन्तामणौ मुरारिमतमुल्लिखित-मतोऽयं द्वादशशतके ततः पूर्वं वा जातो मन्तुं शक्यते। 'मुरारेस्तृतीयः पन्था' इति मिथिलायां प्रसिद्ध्यति, तेन मन्येऽयं मैथिल आसीत्।

### (च) उत्तरमीमांसा-दर्शनम् (वेदान्तदर्शनम्)

सर्वाण्येव दर्शनानि-आध्यात्मिकताप्रतिपादनपरत्वेनाऽऽध्यात्मिकशास्त्राणि गीयन्ते। वेदान्तस्यापि तथात्वेनाऽऽध्यात्मिकशास्त्रत्वमक्षुण्णमेवेति बोध्यम्।

वेदान्तो नामापनिषत्प्रमाणम्। तदुपकारीणि शारीरिकसूत्रादीनि। वेदस्यान्ते ज्ञानस्यैव निरूपणीयत्वेन ज्ञानं ब्रह्मेति सिद्धम्। वेदान्तशास्त्रे पदार्थस्य जड-चेतनभेदेन द्वैविध्यमङ्गीकृतमस्ति। तत्र चेतनपदजन्य बोधविषयतावद् ब्रह्म। तदन्यश्च



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

सर्वोऽपि जडपदार्थः। मायाया मायाकार्यस्य च सर्वस्यापि जगतो जडपदार्थत्वेन तदतिरिक्तं किमपि नास्त्येवेति ध्येयम् इति।

एवं वेदान्ते सत्यमिथ्याभेदेन पदार्थो द्विविध इत्यपि वक्तुं शक्यते। तत्र सत्यपदार्थो ब्रह्म। तदतिरिक्तं सर्वं माया, मायाकार्यं च सर्वमेव जगच्चास्ति मिथ्याभूतं जडात्मकं चेति।

इत्थञ्च वेदान्तदर्शनशास्त्रे द्वयोरपि पदार्थयोरेक एव ब्रह्मपदार्थो मुख्य स्तस्य चेतनत्वात् वस्तुत्वाच्च। स च ब्रह्मपदार्थो ज्ञानरूपः। तथाहि-

**'सत्यं ज्ञानमनन्तं ब्रह्म।'**

**'नित्यं विज्ञानमानन्दं ब्रह्म।'**

**'प्रज्ञान ब्रह्म।'**

इत्यादिश्रुतयः सर्वा अपि ब्रह्मणो ज्ञानरूपतां प्रतिपादयति। ज्ञानातिरिक्तस्य सर्वस्य चाऽवस्तुत्वं, जडत्वम् अज्ञानरूपत्वम्, अज्ञानकार्यत्वञ्च सिद्ध्यति। अत एव ज्ञानातिरिक्तस्य सर्वस्याप्यन्धकाररूपता स्वतः सिद्ध्यति।

एतावता प्रबन्धेन निखिलदृश्याकारपरिणतमायायास्तकार्यस्य च आश्रय-भूतत्वात् सर्वप्रकाशकत्वाच्च ब्रह्मण एव परमार्थतस्त्रिकालाऽबाध्यत्वरूपं सत्यत्वमायातीति चिदात्मब्रह्मणोऽतिरिक्तं सर्वमेव मायिकमत एव स्वाप्निकम् (स्वप्नतुल्यम्) अत एवाऽज्ञानकल्पितम्।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

कल्पितस्य च सर्वस्यापि सांसारिकपदार्थस्य मिथ्यात्वेन परमार्थतः स्वास्तित्वविहीनत्वं निश्चीयते। केवलं संसारस्य सांसारिकपदार्थनां च व्यावहारिकत्वेन ते व्यवहाराय कल्प्यन्ते।

नो चेदयमस्ति वेदान्तसिद्धान्तः सोऽपि श्रुतिप्रपिाद्यः, ब्रह्मसूत्रप्रतिपाद्यस्तदीय-भाष्यसमर्थितो भगवद्गीताऽनुमोदितश्च-'ब्रह्मैवेदं सर्वम्' - बृ. उ. 2/5/1, 'आत्मैवेदं सर्वम्' - छा. उ. 7/25/2, 'सच्चिदानन्दरूपमिदं सर्वम्' - नृ. ता. उ. 7, 'अहमेव जगत् सर्वम्' - तेजाबि. उ. 6/43 इत्ययं सिद्धान्तो भज्येत। अत एवैतादृशसिद्धान्तभङ्गप्रसगङ्गेद्वैतहानिरूपाऽपसिद्धान्तापत्तिरूपो दोषोऽपि प्रसज्येत्

अत ज्ञानातिरिक्तस्य सर्वस्याऽवस्तुत्वं, जडत्वम् अज्ञानरूपत्वं स्वास्तित्व-विहीनत्वञ्चाङ्गीकुर्वाणो वेदान्ती 'सत्यं-ज्ञानमनन्तं ब्रह्म', 'नित्यं विज्ञानमा नन्दं ब्रह्म' इत्यादिश्रुतीः समाश्रित्यैव केवलं स्वसत्ताकस्य शुद्ध-बुद्ध-मुक्तस्वभावस्य त्रिकालाऽबाध्यस्य ब्रह्मणो ज्ञानरूपतापक्षस्यैव श्रेयस्करत्वं ब्रूते-

**'ज्ञानाद् ऋते न मुक्तिः।'**

**'ज्ञानादेव हि कैवल्यम्।'**

एवम्भूताः श्रुतयोऽपि ज्ञानरूपतापक्षमेव समर्थयन्ति, अनुमोदयन्ति।, प्रतिपादयन्ति च।

वेदान्तो वेदस्यान्तिमोभागः अवसानभागः इति विग्रहेण उपनिषद् उच्यते। उपनिषद् एव प्राचीनैर्वेदान्तशब्देनोक्ताः। वेदान्तसारे वेदान्तोनाम उपनिषत्प्रमाण-



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

मित्युक्तम्। उपनिषदोऽनेकाः तासु विरोधोऽपि प्रतिभासते। तस्यैव विरोधस्य दूरीकरणाय व्यासेन ब्रह्मसूत्राणि रचितानि। एतानि सूत्राणि पाणिनेरपि प्राचीनानि। इमे सर्वेऽपि वेदान्ता निम्नलिखितविषयेषु मतैक्यं धारयन्ति–

1. अनादिरनुवर्त्तमानोऽयं संसारोऽपास्य एव।
2. ज्ञानापेक्षया कर्मणो गौणत्वम्।
3. ब्रह्मादीन्द्रियातीतवस्तुनिरूपणे वेदाः प्रधानतया प्रमाणानि।
4. उपनिषदो गीता ब्रह्मसूत्राणि चेति प्रस्थानत्रयी मतसाधनायावलम्बनम्।
5. ब्रह्मव्यापकं नित्यञ्चेतनञ्च।
6. ब्रह्मैव जगज्जन्मस्थितिप्रलयकारणं नान्यदचेतनं प्रकृत्यादि।

तदिदं सङ्क्षिप्य वर्णितो वेदान्तसमुदायः। भारतीयदर्शनं वेदान्तपर्यवसायि, यतोऽत्र सर्वत्र दर्शनेषु क्रमविकास इव प्रतीयते। प्रथमं कणादस्यारम्भवादः तदनन्तरं गौतमस्य परमाणुवादः, तत्परोऽपि सांख्यस्य परिणामवादः, सर्वान्ते वैदिको विवर्त्तवादः। सोऽयं विकासो वेदान्तपर्यवसायितां बोधयति दर्शनानाम्।

### (छ) चार्वाकदर्शनम्

चार्वाक् इति निर्वचनं चार्वाकशब्दस्य बृहस्पति प्रणीतमिदं दर्शनम्। प्रत्यक्षमेव केवलं प्रमाणम्, इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं हि तत्। शरीरमेव जीवः, सृष्टिः स्वभावत एव जायते। न तत्रेश्वरापेक्षा। ईश्वरो नास्त्येव। पतञ्जलि समये अस्मिन्



CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

दर्शने ग्रन्थाः प्राप्यन्ते स्म, सम्प्रति नोपलभ्यन्ते। सम्प्रति तु दर्शनग्रन्थेषु यत्र तत्र उद्धरणमात्रं पूर्वपक्षरूपेण दृश्यते। यथा-

**यावज्जीवेत्सुखं जीवेदृणं कृत्वा घृतं पिबेत्।**

**भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥**

**त्रयोवेदस्य कर्तारो भाण्डपूर्तनिशाचराः।**

प्रकृतिवादः (Naturalism) यस्यार्थः Natur = प्रकृतेः, Lism = वादः भवति। अस्य वादस्य प्रवर्त्तकाः रूसो (Rousseau) वर्तते। भारतीयमतानुसारं नायं अतिरिक्तः कश्चन् वादः अपि तु चार्वाकदर्शनान्तर्भूतः जडवादः एव। जडतत्त्वस्य अधीनं मनः भवति। प्रकृतेः महत्त्वं यः वादः ददाति सः प्रकृतिवादः। अद्यतने दिने अस्य शाखात्रयं विद्यते। यथा-

1. भौतिक-जगतः प्रकृतिवादः (Naturalism of Physical World)
2. यान्त्रिक-प्रकृतिवादः (Mechanical Naturalism)
3. जैविक-प्रकृतिवादः (Biological Naturalism)

## (ज) बौद्धदर्शनम्

बौद्धदर्शनं जैनदर्शनादुत्तरकाले प्रचरिताभवत्। बौद्धदर्शनस्य भागद्वयम्-

1. धार्मिको भागः, धार्मिकभागे - आध्यात्कि तत्त्ववर्णनम् आचारनिरूपणं च प्रपञ्चितम्,



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

2. दार्शनिक-भागः, दार्शनिकभागे तु तार्किकदृष्ट्या बौद्धसिद्धान्तस्य सूक्ष्मं विवेचनं प्रस्तुतम्। बौद्धानां मते जीवो जगच्चेत्युभयमपि अनित्यं प्रतिक्षणपरिणामशालि च। बौद्धदर्शनस्य प्रस्थानं चतुर्धाविभज्यते-

(क) वैभाषिकाः - 'बाह्यार्थप्रत्यक्षमङ्गी कुर्वन्ति। (ख) सौत्रान्तिका - ब्राह्यर्थमनुमेयमाहु। (ग) योगचारा-विज्ञानवादिनः। (घ) माध्यमिकाः शून्यवादिनः।

(क) बौद्धदर्शने त्रीणि रत्नानि - 'शीलं, समाधिः, प्रज्ञा चेति'।

(ख) बौद्धदर्शने पञ्च बोधिवृक्षम् - 'क्षमा-रूपिणी-जटा, धैर्यरूपि-दृढ़मूल, चरित्ररूपि-पुष्पम्, बुद्धिरूपिणीशाखा, धर्मरूपिफलम्।

(ग) बौद्धदर्शने पञ्च अविद्या - आलस्य, जन्म-मृत्यु, काम, क्रोध, विशांदाः।

(घ) बौद्धदर्शने अष्टाङ्गमार्गाः - सम्यक्दृष्टिः, सङ्कल्प-वाणी-कर्म-आजीविका-उद्योग-स्मृति-समाधिरिति।

(ङ) बौद्धदर्शने पञ्चशीलत्वम्

1. जीवहिंसा न करणीया
2. चौरकार्यात् विरक्तिः
3. व्यभिचारात् विरक्तिः
4. असत्यभाषणात् विरक्तिः
5. मद्यपानतः विरक्तिश्चेति।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

## (झ) जैनदर्शनम्

बौद्धदर्शनात् पूर्वतनम्। महावीरेण रागादिरिपवोजिता इत्यसौ जिन् शब्देनोक्तस्तदीयतया दर्शनमिदं जैनदर्शननाम्नप्यभिहितम्। तीर्थङ्करेष्वाद्यः ऋषभ्झदेवनामाऽऽसीत्, महावीरश्चान्तिमः। दिगम्बर-श्वेताम्बराख्य सम्प्रदाय द्वयस्येदमेव बीजम्।

(क) जैनदर्शने नव तत्त्वानि - जीवः, अजीवः, आस्रवः, बन्धः, संवरः, निर्ज्जरः, मोक्षः, पुण्यम्, पापश्चेति।

(ख) जैनदर्शने त्रीणि रत्नानि - सम्यक्दर्शनम्, सम्यक्ज्ञानम्, सम्यक्चरित्रम्

(ग) जैनदर्शने सदाचारस्य पञ्चनियमाः - अहिंसा, सत्यम्, अस्तेयम्, ब्रह्मचर्यम्, अपरिग्रहश्चेति।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

# प्रथमोऽध्यायः

भारतीयदर्शनेषु सांख्यदर्शनस्य स्थानं अतीवादरास्पदमस्ति। वैदिक-विश्वदर्शनेऽपि सांख्यदर्शनं प्रमुखं प्रथमञ्च परिगण्यते। वस्तुतः सर्वदर्शनेषु सांख्यदर्शनप्राथम्ये कानिचित् महत्त्वपूर्णानि कारणानि दृश्यन्ते। तत्र प्रथम इदं दर्शनं वेदेन साक्षाद् सम्बद्धं वेदर्षि प्रणीतञ्च सम्मान्यते। वैदिकग्रन्थेषु सांख्यदर्शनप्रणेतुः चर्चा भूयान् दृश्यते। उपनिषत्सु यत्र विश्वदर्शन तत्वान् विवेचनं प्राप्यते, तत्र सांख्यगत तत्वानां विश्लेषणं प्राथम्येन क्रियते। श्वेताश्वरोपनिषदि सांख्यशास्त्रप्रवर्तकत्वेन महर्षिकपिलस्य नामोल्लेखः प्राप्यते।

**ऋषिं प्रसूतं कपिलं यस्तमग्रेज्ञाने विर्मति जायमानां च पश्येत्।**[1]

प्राचीनेषु दर्शनेषु साङ्ख्यशास्त्रस्य मुख्यं स्थानमिति सर्वैरङ्गीक्रियते। वेदब्राह्मणारण्यकोपनिषदात्मके वैदिके साहित्येऽस्य स्फुटाः सङ्केता विद्यन्ते। वैदिके साहित्ये वेदाः प्राचीनतमाः। वेदेष्वापि ऋग्वेदः प्राचीनतमः। ऋग्वेदे 'कपिल' इति शब्दः प्रयुक्तः।[2] सायणोऽस्यार्थमप्रसिद्धः ऋषिः इत्यकरोत्। प्रसिद्धोऽसावृषिः सांख्यस्य प्रवक्ता कपिल एव भवितुमर्हति। अयमेव शब्दः 'सिद्धानां कपिलो मुनिः' इति गीतायाः सामंजस्ये प्रतीयते। वेदभाष्यकारस्सायणः साङ्ख्यप्रवक्तारं कपिलमेव प्रसिद्धमृषिमन्यत इत्यनुमातुं शक्यते।[3] ऋग्वेदेऽपि प्रकृतेर्विभिन्नाः पदार्थाः 'देवता' इति शब्देन

---

1 श्वेत. 5/2

2 ऋग्वेदः 10/27/16

3 श्रीमद्भगवद्गीता 10/23


CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

व्यपदिशयन्ते। अधिष्ठानमधिकृत्य यदि किंचिद्दर्शनं प्रकृतेवास्तविकत्वं स्वीकरोति तर्हि तत्साङ्ख्यमेव। अद्धैतवेदान्तस्य प्रकृति मिथ्यात्वस्वीकारे वैदिकदर्शनत्वं बाधितं भवति।[4] पाश्चात्यो विद्वान् दालमनमहोदयः साङ्ख्यं ब्रह्मविद्यात्वेन स्वीकरोति। तदनुसारम् साङ्ख्यं निरपेक्षस्य स्थाने प्रकृतिं मनुते तस्याश्च कार्याणाम् विवेचनं करोति। व्यक्तिरूपे ईश्वरमस्वीकृत्य निरपेक्षस्य सत्ता स्वीकरोति, यदन्तिमो निर्वाणोऽस्ति। अस्मिंश्च व्याक्ताव्यक्तयोः तत्त्वयोः सङ्ख्याया निरीक्षणं प्रधानमस्ति।

छान्दोग्यस्य वृहदारण्यकस्य च सिद्धान्ता अत्र स्पष्टतां यान्ति। अत्रोपनिषदोः व्यावहारिकसत्तायाः स्पष्टतया विवेचनं नैवास्ति अतोऽत्र न विवर्तो न च परिणाम एवावगन्तुं शक्यते। अतः उभावेव दृष्टिभेदेन द्रष्टुं शक्येते।

दालमनमहोदयोऽनयोः प्रतिपादितं दर्शनं प्राधान्येन साङ्ख्यमिति स्वीकरोति। यतो ह्यसौ महाभारतेऽभिव्यक्तं सांख्यमेवपरवर्तिसांख्यस्य शाङ्करवेदान्तस्य चोद्गमं स्वीकरोति। एतादृशं साङ्ख्यमसो नारदीयसूक्ते पश्यति। तदनुसारमात्मा शतपथे शाखायनब्राह्मणे च पंचविंशतितमं तत्त्वं स्वीक्रियते। अस्मादन्यानि चतुर्विंशतितत्त्वानि स्पष्टतया संकेतविषया भवन्ति। त्रींश्च गुणानथर्ववेदे वर्णितान् मन्यते।[5]

4 डा. राम सुरेश पाण्डेयः – महाभारत और पुराणों में साङ्ख्यदर्शन, पृष्ठ 3

5 Samkhya System P.P.59-61 – A.B Keith, London



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

कीथमहोदयोऽस्य[6] विचारमालोचयति, नैव च मनुते विचारमिमं विश्वासास्पदम्। तदनुसारं साङ्ख्ये ब्रह्मण: स्थितिरनैतिहासिकी वर्तते।

यदि दालमनमहोदयस्य विचारे न विद्यते पूर्णरूपेण सत्यं तर्हि तस्यांशिकं सत्यं स्वीकर्तुं कश्चित्सकुचितो न स्यात्। ब्रह्म-सिद्धान्त विषयेऽतिरंजनोत्वमेव वर्तते, परंच साङ्ख्ये ब्रह्मण: स्थिति: पुराणादीनामागमप्रमाणानामाधारसिद्धास्ति। स्थितावस्यां कीथमहोदयस्योपर्युक्तकथनं संगति-नैव भजते इति प्रतीयते।

शिवपुराणस्य रुद्र संहितायां साङ्ख्याय, प्रकृतिवाद, ब्रह्मवादि, तत्त्वविदित्यादीनां शब्दानाम् प्रयोगोऽनेकश: कृत:।

प्रभाकरो[7] ये वृहती-साङ्ख्यं मन्वते तान् ब्रह्मविद: इति शब्देना कथयत्। भोजराज: साङ्ख्येभ्यो ब्रह्मवादिनां संज्ञा प्रददौ।

माठरवृत्तावपि साङ्ख्यं ब्रह्मोपदेशविद्यात्वेन वर्णितम्। अहिर्बुध्न-संहिताया: षष्ठितन्त्रेऽपि प्रथमं तत्त्वं ब्रह्मास्ति। अत: साङ्ख्यमिति पदमेवाधिकृत्यास्य साङ्ख्यस्य वैदिकात्साहित्याद्वहिष्करणं समीचीनं नैव प्रतीयते।

शतपथब्रह्मणे ब्रह्मणो विश्वस्यान्तिमतत्त्वं स्वयम्भूत्वं च प्रतिपादितम्। दासगुप्त-पुशल्करमहोदयावास्मिन् विषये सविस्तृत विचारमकुरुताम्।[8] अत: प्रकृति: विश्वस्यान्तिमं तत्त्वमस्ति। अत: स्वयम्भ्वादिभि: पदै: व्यपदेष्टुं सर्वथैव योग्याऽस्ति। स्वयम्भू: त्रिगुणानुसारं त्रिविधोऽस्ति-इति पुराण महाभारतस्मृतिषु

---

6 Samkhya System P.260. The Great Epic of India P.P.81. F.F. Garbe:-Samkhya Philo sophy P.P.8 F.F

7 Origin & Development of Samkhya System of Thought, P.P. 260

8 History of Indian Philosophy Vol. I P.P.21-22 and Studies in Epics & Puranas-A.D. Pusalkar: Bombay P.P.23-24



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

मन्यते प्रकृतेः वैषम्यावस्थायां गुणप्राधान्यानुरूपं विकासमेवाधिकत्यैतादृशं कथितम्।

यज्ञो हि प्रमुखो विषयो ब्राह्मणानाम्। एषु चास्ति अल्पीयानेवासरः सृष्टिविज्ञानस्यान्तिमस्य तत्त्वस्य वा विषये जिज्ञासायै। परंच यत्रत्यैः तत्रत्यैश्चोपलभ्यमानैः संकेतैरेव तत्कालीनस्यैतत्सम्बन्धि विचारस्यानुमानं कर्तुं शक्यते।[9]

शतपथब्राह्मणे हिरण्यगर्भस्य वर्णनं विद्यते। ब्राह्मणेषु व्यावहारिकसत्यमेव विशेषतया गृहीतम्। अतः साङ्ख्यस्यैव सिद्धान्तोऽत्राधाररूपेण कथयितुं शक्यते।

आसुरेः शतपथब्राह्मणेऽनेकश उल्लेखनोपर्युक्तं तथ्यं प्रतिपापादितं भवति। ब्राह्मणेऽस्मिन् पंचविंशतितत्त्वानि प्रयुक्तानि। अस्माद्विराद्धः कीथमहोदयः कथयति,[10] साङ्ख्यस्य पंचविंशतितत्त्वानां सङ्ख्या न स्वीकर्तुमर्ह्यते। परंचात्र किंचित्प्रमाणरूपेण स्वमतपुष्टये न पुरस्कृतम्। अतः कथनं-कल्पनाप्रसूतम-प्रामाणिकमिति कथयितुं शक्यते। पंरचोदयवीरशास्त्र्यनुसार[11] ब्राह्मणस्यास्य रचयिता याज्ञवल्कोऽस्ति यः पंचशिखात्सुदूरं पश्चादभवत्। शतपथब्राह्मणस्यै-वान्तिमो भागो वृहदारण्यकोपनिषदस्ति। यस्मिन् कीथमहोदयोऽपि द्वित्ववादिने साङ्ख्यायावसरं प्रदत्ते।[12]

9 डा. राम सुरेश पाण्डेयः महाभारत और पुराणों में साङ्ख्यदर्शन

10 Samkhya System :- P.P.38- 9 A.B. Keith London

11 श्री उदयवीर शास्त्री-साङ्ख्यदर्शन का इतिहास पृ. 457

12 Samkhya System -: P.9



CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

साङ्ख्यविषये सर्वप्रथमोल्लेखः श्वेताश्वतरोपनिषदि विद्यते।[13]

डा. राधाकृष्णन् अपि स्वकीये भारतीयदर्शनेऽलिखित् न केवलं पुनर्जन्मनः, संसारस्य च निस्सारतायाः भावा एव, अपितु एतादृशा मुख्याः सिद्धान्ता यथाज्ञानं मोक्षस्य साधनम्, पुरुषो विशुद्धः प्रमातेति उपनिषद्भ्यो गृहीताः।[14]

कठोपनिषदि[15] विकासशृङ्खलायाम् प्रकृतिस्तरे सर्वोच्चैस्थानमव्यकताय प्रदत्तम्। यस्मान्महदादेरुत्पतिर्भवति। अहङ्कारस्योल्लेखो न कृतः परमात्मनश्च (ब्रह्मणः) सत्ता सर्वोपरि स्वीकृता। तथाऽपि विश्वविकासस्य प्रथममेवेदं वर्णनमस्ति। यस्योपयोगः साङ्ख्यविचारकैः कृत इव प्रतीयते। प्रकृतेः सर्वप्रथमोत्पत्तिर्महदिति वर्णिताऽस्ति। तथा चैतद्विचारस्य स्वाभाविकोद्भवः, उपनिषदः तस्माद्ब्रावादस्ति यदनुसारमाद्यामसंस्कृतां प्रकृतिमुत्पाद्य पश्चात्सर्वोपरि ब्रह्मसृष्टो सर्वस्मात्पूर्वमुत्पन्नं भूत्वा पुनश्चाभिव्यक्तं जायते।[16]

श्वेताश्वतरोपनिषदि[17] साङ्ख्यस्य वैश्वसिद्धान्तानां, त्रयाणां गुणानां चाधिकं परिष्कृतं वर्णनं विद्यते। यद्यपि साङ्ख्यं तत्त्वेभ्यः स्व

---

13 श्वेताश्वतरोपनिषद् 6/23

14 Radhakrishnan : Indian Philosophy Vol 2 बृहदारण्यकोपनिषद् II 4, I,II,2; IV,3,15

15 कठोपनिषद् -3: 10 11 तथा 6: 7-11 तुल्यताम् 6: 5, 6

16 राधाकृष्णन् भारतीयदर्शनम् ऋग्वेद 10: 12, 1 तुल्यताम् महाभारतम् 12: 3 11, 3 पृष्ठ 345-246

17 श्रीराधाकृष्णन् महोदयः भारतीय दर्शन प्रथम खण्ड 466-76:, श्वेताश्वतरोपनिषद् 1:4:, 4:10:,3:12:, तथा 4:1



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

मुख्यसिद्धान्तेश्वरवादाद्गौणं स्थानमददात्। इयमुपनिषद् प्रधानं च मायांचैवं ब्रह्म च पुरुषं च समानतया स्वीकरोति।[18]

मैत्रायणी-उपनिषद् या बौद्धकालादूर्ध्वं निर्मिता प्रतीयते[19] परिष्कृतसांख्येन सुपरिचिताऽस्ति। तन्मात्राणा[20] त्रयाणां गणानाम्,[21] आत्मनश्च प्रकृतेश्च भेदानुल्लिखति।[22]

सुरेन्द्रनाथ[23]दास-गुप्त-महोदयोऽपि लिखति, साङ्ख्यस्य कीटाणव उपनिषत्सु लभ्यन्ते। विशेषताया श्वेताश्वतरोपनिषदो मैत्रायणी-उपनिषदश्च केचनांशाः व्रिद्यन्ते येषामध्ययनेन जायते यत् साङ्ख्यं विकासमभजत् बहवश्चास्य शब्दाः पूर्वमेव प्रयुक्ताः।

बलदेवोपाध्यायोऽपि[24] स्वकीये भारतीये दर्शने उल्लिखति, साङ्ख्यम्नितान्तं प्राचीनं दर्शनमस्ति। साङ्ख्यसिद्धान्ता उपनिषत्सूपलभ्यन्ते। यद्यपि साख्यं योग इति शब्देन सह श्वेताश्वतरोपनिषदि उपलभ्यते तथाऽपि

---

18 श्वेताश्वतरोपनिषद् 1:20, 4:10, 3:12 तथा 4:1

19 श्री राधाकृष्णन् भारतीय दर्शन प्रथम खण्ड पृष्ठ 126 पादटिप्पणीः कीथ महोदयः सांख्य पृष्ठ 14-15 'नृसिहतापनीय' 'गर्भ' तथा 'चूलिका' सर्वाणीमनि सांख्यसिद्धान्तैः प्रभावितानि

20 3:2, तथा च छान्दोग्योपनिषद् 6:3

21 2:5: । केचन विद्वान्सः त्रयाणां गुणानां विचारं छान्दोग्योपनिषदि वर्णितास्त्रिभिरंङ्गः सम्बद्धमवगच्छन्ति। येषां पुनरावृत्तिः श्वेताश्वतरोपनिषदि विहिता। रा. कृ. पृ. 245

22 2:5: । केचन विद्वान्सः त्रयाणां गुणानां विचारं छान्दोग्योपनिषदि वर्णितास्त्रिभिरंङ्गः सम्बद्धमवगच्छन्ति। येषां पुनरावृत्तिः श्वेताश्वतरोपनिषदि विहिता। रा. कृ. पृ. 245

23 There are passages in Svetashvtaropnishad and particularly Maitraini Upnishad from which it appears that the Samkhya line of thought had considerably developed and many of its technical terms were already used.

24 बलदेवोपाध्याय :- भारतीयदर्शन-श्वेताश्वतरोपनिषद् तत्कारणं सांख्ययोगाधिगम्यम् 6/13/ पृष्ठ311


CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

तस्यानेके माननीयाः सिद्धान्ताः तस्मादपि प्राचीनासूपनिषत्सू बीजरूपेणोलभयन्ते। सत्त्वरजः तमसां त्रयाणां गुणानां सिद्धान्तः छान्दोग्योपनिषदि प्रथमत एव दृश्यते।

छान्दोग्योपनिष[25]द्वर्णयति-अग्नेरूपं रोहितं, जलस्य शुक्लं, पृथिव्याश्च कृष्णमस्ति। अस्य जगत उत्पत्तौ त्रीणि, रूपाण्येव कारणभूतानि सन्ति। इमान्येव सत्यम्। जगतः केवलं नामरूपात्मकत्वात् विकारमात्रत्वमेव प्रकृतेः कल्पनायां श्वेताश्वतरोपनिषद् एषामेव रूपाणामुपयोगं कुरुते।[26] इन्द्रियेभ्यः परोऽर्थात् परं मनः, मनसः पराबुद्धिः, बुद्धेः परमव्यक्तम् अव्यक्तात्परः पुरुषः, पुरुषाच्च परो नास्ति अन्यत् किंचिदपि इत्येमं क्रमं कठोपनिषदः[27] साङ्ख्यं स्वग्रन्थेषु स्वीकरोति।

श्वेताश्वतरोपषिद् सांख्यसिद्धान्तानाम् भण्डारभूताऽस्ति। ईश्वरः प्रधानस्य प्रकृतेर्वाक्षेत्रज्ञस्य जीवस्य वा, गुणानां चाधिपतिरस्ति। यथा मकरिका स्वमुखनिस्सृतैस्तन्तुभिजालं निर्माति एवमेवेश्वरः प्रकृतिजन्यैर्गुणैः स्वं प्रकटयति।[28]

पुनः प्रकृतिः माया इति शब्देन महेश्वरचमायीति-इति शब्देनाहूयते।

पौराणिकवर्णानुसारं प्राचीनभारते महर्षिकपिलप्रणीतस्य सांख्यदर्शनस्य दार्शनिकेषु समधिकसमादरः आसीत्। सांख्याचार्याणां नियतक्रमेण काचित् सूची यद्यपि अद्यापि नोपलभ्यते। तथापि सांख्यदर्शनस्य भारतीयदर्शनान्यतमत्वं प्रायः सुप्रसिद्धमासीत्। सांख्यचार्यत्वेन यद्यपि अनेकेसामाचार्याणां नामानि

25 छान्दोग्योपनिषद् 6/4/1

26 अजामेकां लोहितकृष्णशुक्लाम् बह्वीः प्रजाः सृजमानाः सरुपाः (श्वेताश्वरोपनिषद् 4/5)

27 कठोपनिषद्-1/3/10,13

28 श्वेताश्वतरोपनिषद्-4/13 'प्रधानक्षेत्रज्ञपतिर्गुणेशः।'



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

स्मरीयन्ते। तथापि सांख्यदर्शनप्रणीतत्वेन महर्षिकपिलस्य नाम सादरं गृहयेते। अत्र कपिलादि अनैकेसांख्याचार्यः सैतिह्यं विविच्यन्ते।

**महर्षिकपिलः**

संस्कृतसाहित्ये कपिलनाम्ना अनेके आचार्याः प्राप्यन्ते। कस्य कपिलाचार्यस्य सांख्यदर्शनेन सह सम्बन्धः अस्तीतिनितरां विचारणीयः। श्वेताश्वरोपनिषदि सांख्यशास्त्रप्रर्वतकं कपिलमधिगता केचन आचार्या तमेव वस्तुतः सांख्यदर्शनप्रणेतारं मन्यन्ते परन्त्वत्र केचन पूर्वास्तयाः पाश्चात्याश्च विद्वांसः कपिलस्य पूर्वैतीह सम्बन्धे सन्दिहन्ते। तत्र मैक्समूलर-कोलब्रुकप्रभृतयः पाश्चात्या विचारकाः पुराणेषु समुपलब्धं कपिलमेव सांख्यशास्त्रप्रणेतारं मन्यन्ते। बौद्धास्तु कपिलवस्तु नगरनिर्मातारमपि तमेव मन्यन्ते।

पाश्चात्यो विद्वान् कीथः कपिलशब्देन हिरण्यगर्भाक्षं विष्णुं शिवं वा मनुते। भागवतमहापुराणेऽपि कपिलः विष्णोः पञ्चमावताररूपेण वर्णितः।[29] कल्पभेदेन कपिलः क्वचित् अग्निरूपेण कुत्रचित् ब्रह्मपुत्ररूपेण च वर्णितः। महाभारते[30] वायुपुराणे[31] च कपिलः अग्निदेवावतारः ज्ञानिनामग्रजः आदित्य नाम्ना सम्वर्णितः।

---

29 श्रीमद्भा., (1/3/11)

30 अग्निः स कपिलो नाम सांख्ययोगप्रवर्त्तकः।। (महा. 11/141)

31 आदित्यसंज्ञः कपिलस्त्वगजोऽग्निरिति स्मृतः। (वा.पु. 3-43)



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

भागवतमहापुराणे कर्दमदेवहूतिभ्यामुत्पन्नः ऋषिः कपिलः सांख्यशास्त्रस्य प्रणेता अस्तीति निम्नः श्लोकेः विमृष्टः-

**अयं सिद्ध गणाधीशः सांख्याचार्यैं सुसम्मतः।**

**लोके कपिल इत्याख्यां गन्तान्ते कीर्तिवर्धत।।**

ब्रह्मपुराणे कथानकमेकं प्रसिद्धं यत् महाराज्ञः सगरस्य षाष्टसहस्त्रपुत्राः महर्षेः कपिलस्य क्रोधाग्निना भस्मीभूताः। वामनकूर्मपुराणयोः ब्रह्मणः मनः प्रसूतेषु सप्तपुत्रेषु कपिलो अन्यतमेः प्रजापतिरूपः परिणगणितः। अयं कपिलः ऋग्वेदोक्त दशसंख्याकेषु प्रजापतिषु अन्यतमः (आम्नातः)। तथा च मन्त्रवर्णः- "सप्त वीरासोऽधरादुदायन्नष्टोत्तरात्तात्समजग्मिरन्ते। नव पश्चात्तात्स्थिविमन्त आयन्दशप्राक् सानु वितरन्त्यश्नः।" दशानामेकं कपिलं समानं तं हिञ्चन्ति ऋतवे पार्याय। गर्भं माता सुधितं वक्षणा स्वेनन्तं तुषयन्ती विमर्ति।। (ऋ.वे. 10/26/1, 16)

बौद्धः अश्वघोषः स्वकीये बुद्धचरित नामके ग्रन्थे कपिलं प्रजापतिरूपं मन्वानः एवमुल्लिखति-

**सशिष्यः कपिलश्चेह प्रतिबुद्ध इति स्मृतः।**

**स पुत्रः प्रतिबुद्धश्च प्रजापतिरिहोच्यते।।**

श्वेताश्वरोपनिषदः भाष्ये आद्यशङ्कराचार्येण सगरपुत्राणां भष्मकर्ता कपिलः कश्चिदन्यः प्रतिपादितः। तथा सांख्यप्रणेता कपिलः कश्चिदन्यः इत्युक्तः।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

एवं रीत्या पुराणेषु कथितानां कपिलानां चतुर्धा समुल्लेखः कर्तुं शक्यते। तत्रेको यत् बौद्धाः गौतममुनिवंशजं मन्वते यस्य च नाम्ना कपिलवस्तुनगरस्य निर्माणं जातमपि।

द्वितीयो ब्राह्मणः मनः प्रसूतो मूलतत्त्वज्ञानी कपिलः। तृतीयः अग्न्यावतारविशिष्टः तपस्वी कपिलः येन स्वक्रोधाग्निना सगरपुत्राः भस्मीकृता। चतुर्थो कर्दमदेवहूतिभ्यां समुद्भूतः विष्णववतारभूतः सांख्यतत्त्वोपदेष्टा कपिलः।

एतेषु चर्तुषु कपिलेषु कः कपिलः सांख्यशास्त्रस्य प्रणेता भवितुमर्हति इति नितरां विचारणीयो विषयः। तत्र सांख्य बौद्ध साहित्योरनुशीलनेन इदं ज्ञायते यत् सोख्यदर्शनं बौद्ध दर्शनतो प्राचीनतरमस्ति। अतः कपिलवस्तुनगरस्य निर्माता गौतममुनिवंशजः कपिलः सांख्यशास्त्रस्य प्रणेता इति बौद्धानां कथनं सर्वतः असङ्गतं प्रतिमाति। एवमेव विष्णववताररूपेण वर्णितः कपिलः वेदान्ताद्युपदेशेकत्वेन अभिमत्वाद् न सांख्यशास्त्रप्रवर्त्तको भवितुमर्हति। अवशिष्टौ द्वौ कपिलौ प्रथमः ब्रह्मणो मानसपुत्रः द्वितीयो अग्न्यावतारश्च सांख्यशास्त्रस्य प्रणेतारौ सम्भवतः। तत्र सांख्यशास्त्रीय वाङ्मयानुशीलनेन इदमवगम्यते यत् ब्रह्मसुतः कपिलः तत्त्वसमासस्य रचयिताऽस्ति। तथा अग्न्यावतारभूतः कपिलः सांख्यसूत्रस्य प्रणेता मन्यते।[32] एतस्य मतस्य उपोदवल्कं प्रमाणं महाभारतादि ग्रन्थेषु द्रष्टुं शक्यते।

32 सांख्यशास्त्रस्य ग्रन्थे श्रीकृष्णशास्त्रितैलङ्गकृत लेखे



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

**सनः सनत्सुजातश्च सनकः ससन्दनः।**

**सन्तकुमारः कपिलः सप्तमश्च सनातनः।**

**सप्तैते मानसाः प्रोक्ता ऋषयो ब्रह्मणः सुताः।**

**स्वभावमतविज्ञाना निवृतिधर्ममा श्रिताः।।**

**एते योगाविदोमुख्या संख्यज्ञानविशारदाः।**

**आचार्यां धर्मशास्त्रेषु मोदन धर्म प्रवर्तकाः।।**[33]

वायुपुराणे मोक्षज्ञानं जिज्ञासानां मुनीनां एका सूची प्राप्यते। तत्र आसुरिकपिलः प्रभृतिऋषीणां ब्रह्मणो मानसपुत्ररूपेण उल्लेखः प्राप्यते। सांख्यकारिकाभाष्यकर्त्ता गौडपादाचार्योऽपि सनकादि सप्तर्षिसु कपिलं ब्रह्मसुतं व्यवज्ञापयति।

**सनकश्च सनन्दश्च तृतीयश्च सनातनः।**

**आसुरिः कपिलश्चैव वोढुः पञ्चशिखस्तथा।**

**इत्येते ब्रह्मणः पुत्राः सप्त प्रोक्ता महर्षयः।।**

केचन सांख्यशास्त्रविचारकाः विद्वांसः विष्णवतारकपिलः अथ च अग्न्यावतारकपिलः इत्यनयोः एक एव मन्यन्ते। तत्र एवमभिधीयते यत् विष्णवतारकपिलः एव दाहत्वादिगुणयुक्तः अग्निसमोभूत्वा स्वक्रोधाग्निना षष्टिसहस्त्राणि सगरपुत्रान् भस्मीकृतवान्। पुराणेषु श्रूयते यत् अस्य जनमसमये ब्रह्मा स्वयमेव एनमुत्थाय सांख्यादि दर्शनानां तत्वानिसमुपदिदेश। अतः

33 महा. 12/340/72-74



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

स्वतसिद्धज्ञानत्वात् ब्रह्मणः सममेव अपूर्ववैदुष्याश्च अयमेव ब्रह्मसुतः कपिलः सांख्यादि शास्त्रकर्ता प्रोक्तः। श्रीमद्भागवतपुराणे कपिलद्वारा स्वमारतरं प्रति सांख्यतत्त्वज्ञानोपदेशस्य वर्णनं प्राप्यते। अस्मिन् वर्णने प्रकृतिपुरुषयोः यथोल्लेखः प्राप्यते तेनेदं मन्यीयते यत् इदमेव वस्तुतः सांख्यशास्त्रं लोके प्रसिद्धिमगात्। अत्रैव भागवतीयवर्णनानुसारं विष्णवताररूपस्य कपिलस्यास्य सम्बन्धः सांख्यदर्शनेन सह संजात इति। यद्यपि सांख्यदर्शनतत्वानां इतः प्रागपि अवस्थानं अविच्छिन्नपरम्परा प्राप्तमासीत् परन्तु स्व मातरं देवहूतिमुद्दिश्य कपिलेन सर्वतः प्रथमं प्रकृतिपुरुषादि जागतिकतत्वानामुपदेशः कृतः। एतस्माद् कारणात् सांख्यशास्त्र प्रणेता उपदेष्टा च अयमेव अग्नि समो विष्णवतारभूतः कपिलः मन्यते।

सांख्यशास्त्रप्रणेतुः कपिलस्य सम्बन्धे पौराणिकमितिवृत्तम्-

श्रीमद्भागवतस्य तृतीयस्कन्धेः महर्षेः कपिलस्य प्राकट्यविषयकं विस्तृतविवरणं प्राप्यते। संक्षेपेण इदमुच्यते यत् अखिलब्रह्माण्डनायको भगवान् विष्णुः महर्षेः कर्दमस्य तपसा सन्तुष्टः तत् जायायां मनो दुहितरिदेवहूत्यां कपिलात्मना स्वात्मानं प्राकाट्यात्।

**सहाहं स्वांशकलया त्वदवीर्येण महामुने।**
**तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम्।।**[34]

---

[34] श्रीमद्भा. 3/21/32



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

अनेन प्रकारेण स्वयमेव भगवान् विष्णुः आत्म-मायया सांख्यप्रणेता तत्वविवेचकः कपिलो भूत्वा आत्मतत्त्वज्ञानेन लोकान् बोधयामास।

**कपिलस्तत्त्व संख्याता भगवानात्ममायया।**

**जातः स्वसमजः साक्षादात्मप्रज्ञप्तये नृणाम्।।**[35]

श्रीमद्भागवतस्य प्रथम स्कन्धे एव विष्णोरवताराणां चर्चा कृताऽस्ति। तत्र सिद्धेशो महामुनिः कपिलः विष्णोः पञ्चमावताररूपेण सम्वर्णितः तथा च अयमेव कपिलः सांख्यशास्त्रं प्रवर्तयामास इत्यप्युपवर्णितः। तत्र व्याख्यानेन इदमवगम्यते यत् कपिलात् पूर्वमपि विप्रकीर्णरूपेण सांख्यशास्त्रीय तत्त्वानां विवरणमासीत् परन्तु कालवशात् विलुप्तमिव सञ्जातमासीत्। महामुनिना कपिलेन स्वशिष्याय सांख्यशास्त्रस्योपदेशं कृत्वा पुनः अस्य शास्त्रस्योद्धारः कृतः। सांख्यशास्त्रीयतत्त्वानामुपदेश प्रवचनसूत्रादिनिर्माणद्वारा सर्वतः प्रथमं कपिलेनैव सांख्यशास्त्रस्योद्धारः विहितः। अतः एवाऽयं सांख्यशास्त्रप्रणेतृत्वेन प्रवर्त्तकत्वेन च जगति प्रसिद्धिमगात्। देवी भागवतपुराणे मनागन्तरेण तदेवाख्यानकमाग्रेणितमस्ति। तत्र कर्दमदेवहूत्यामवतीर्णो महायोगी कपिलः स्वमातरं देवहूतिमात्मतत्त्वविनिश्चायकं सांख्यशास्त्रमुपदिदेश इत्युपवर्णितम्।

**रूचैः प्रज्ञये भगवान् यज्ञोनानादिपूरुषः।**

**आकूत्यां देवहूत्यां च कपिलोऽसौ च कर्दमात्।।**

**सांख्याचार्यः सर्वलोके विख्यातः कपिलोविभुः।**[36]

---

35 श्रीमद्भा. 3/25/1

36 श्रीमद्देवीभा. 8/3/13-14



CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

कपिलोऽपि महायोगी भगवान स्वाश्रमे स्थितः।
देवहूत्यै परं ज्ञानं सर्वाविद्यानिवर्तकम्।।
सविशेषं ध्याययोगमध्यात्म ज्ञाननिश्चयम्।
कापिलं शास्त्रमाख्यातं सर्वाज्ञानविनाशनम्।।[37]

विष्णुपुराणे महर्षिकपिलः जगन्मोहनिरासाय विष्णवंश प्रोक्तः।

कपिलर्षिर्भगवतः सर्वभूतस्य वै द्विजः।
विष्णोरंशो जगन्मोहनाशयोर्वीमुपागतः।।

**मत्स्यपुराणेऽपि–**

सांख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते।[38] कूर्मपुराणे कथितं यत् महामुनिना कपिलेन पञ्चशिखजैगीषव्याभ्यां सर्वविद्यानामविद्यानां निवृतये परं तत्त्वज्ञानं प्रदत्तम्।

जैगीषव्याय कपिलस्तथापञ्चशिखाय च।
दत्तवानैश्वरं ज्ञानं सर्वाविद्यानिवृत्तये।।

नारदीयपुराणे सगरस्य प्रसङ्गे कपिलः देवो देवेशो योगी सांख्ययोगरतो विष्णुर्जिष्णु महात्मा कोटिसूर्यसमप्रभोध्याननिरतो मुनीश्वरः समस्तेन्द्रियसन्दोह नियन्ता सागरसन्ततिभस्मकर्त्ता आदिः तेजोराशिश्चोक्तः।[39] पद्मपुराणे सृष्टिखण्डे

---

37 श्रीमद्देवीभा. 8/3/16–18

38 म.पु. (3/29)

39 ना.पु. (8/81)



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

कपिलः साक्षाद् विष्णुरूपो निर्दिष्टः। ''खनन्तः पृथिवी दग्धा विष्णुना येऽश्वमार्गणे।'' स्कन्दपुराणे रेवाखण्डे कपिलः साक्षाद्विष्णुः प्रोक्तः।[40]

बौधायनधर्मसूत्रे (2/6/30) प्रहलादपुत्रस्यासुरस्य कपिलस्योल्लेखोऽस्ति। कलिस्मृतिनामकधर्मग्रन्थस्य रचयिताऽप्येकः कपिलोऽभवत्। शैवसम्प्रदायस्य सूतसंहितायामुपपुराणकर्तृणां प्रसङ्गे एकस्योपपुराणकर्तुः कपिलस्योल्लेखो विद्यते। तत्राष्टादशपुराणानां नामान्युल्लिख्योपपुराणगणनायां सप्तमस्य कपिलोपपुराणस्योल्लेखोऽस्ति।[41]

महाभारतस्यानुशासनपर्वणि विश्वामित्रपुत्रस्य कपिलस्याप्युल्लेखोऽस्ति।[42] वायुपुराणे हिरण्यरोमा कपिल इत्येकस्य गन्धर्वस्य नामास्ति।[43]

महाभारते वनपर्वणि सगरस्याश्वमेधवर्णनपूर्वकं कपिलस्योल्लेखोऽस्ति। राज्ञः सगरस्य षष्टिसहस्त्रपुत्राः कपिलस्य नेत्राग्निना ते तत्काल एव भस्मसाद्भूताः।[44] वाल्मीकि रामायणस्य बालकाण्डे कपिलसम्बन्धिन्या अस्या घटनाया वर्णनमस्ति।[45]

पाञ्चरात्र साम्प्रदायस्याहिर्बुध्न्य संहितायामवताराणां वर्णनप्रसङ्गे एकस्य कपिलस्य उल्लेखोऽस्ति।

---

40 स्क.पु. (175/12/7)

41 कापिलं सप्तमं विदुः। सूतसंहितायाम् (1/14)

42 महा., अनुशासनपर्वणि (7/56)

43 महा., वनपर्वणि (107/1-4)

44 वा.रा. (40/25-30)

45 सांख्यखण्डयोग, पृष्ठे 2, 3



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan K

**सिद्धिं ददाति यो दिव्यां प्रसंख्यानमयीं पराम्।**
**देवः सिद्धिः प्रदानेन कपिलः स निगद्यते।।**

कियन्तः पाश्चात्या आधुनिकाः भारातीयाश्च विद्वांसः कपिलं काल्पनिकं मन्यन्ते, न तमैतिहासिकं व्यक्तिं स्वीकुर्वन्ति। डॉ. कोलब्रुक-जैकोबी-मैक्समूलर प्रभृतयो विद्वांसः कपिलं काल्पनिकं कथयन्ति।

कीथादिनां स्वीकृतिरपि कपिलमत्यन्तं प्राचीनं प्रसिद्धञ्च साधयति। एतेनेदं सिद्ध्यति यत् कर्दमदेवहूतिपुत्रात् कपिलादतिरिक्तानां कपिलानां सांख्येन सह नास्ति कश्चित् सम्बन्धः। कृतत्रेतायुगयोः सन्धिकाले जन्म गृहीत्वा कपिलेन स्वमात्रे देवहूत्यै सांख्यतत्त्वोपदेशो दत्तः। अस्य सांख्यसम्प्रदाये आसुरिः प्रथमः शिष्यः अभवत्।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan K...

# द्वितीयोऽध्याय:

## आसुरिः

अनेके ग्रन्थाः सांख्यप्रवर्तकं कपिलमाचार्यं मन्वते ते इदमपि प्रतिपादयन्ति यत् आसुरिं कपिलस्य प्रथमशिष्यं साधयन्ति। महाभारतग्रन्थः अस्य अभिधानं सांख्याचार्याणां सूचौ ददाति तथा वायुपुराणं माहेश्वरयोगस्य योगिनां नामावलौ। पद्म-कूर्म-वामन-पुराणानि इमं ब्रह्मणः मनः प्रसूतेषु पुत्रेषु गणयन्ति। तर्पणविधिः एतान् कपिलात् तृतीयेन स्थानेन योजयति। आसुरिं पञ्यशिखाचार्यस्य गुरूः मन्यते। हरिभद्रसूरिमहोदयेन षड्दर्शनसमुच्चयटीकायां अस्य एकस्य श्लोकस्य उद्धरणं कृतम्। यस्य सम्बन्धः योगशास्त्रेणास्ति। शतपथ ब्राह्मणेन बृहदारण्येकेन आसुरेः इतिहासं दद्भ्यां लिखितं यत् सः आसुरिनामकस्थानस्य निवासी प्रश्नीपुत्रः आसुरायणस्य पुत्रः आसुरिनामकः पुत्र आसीत्। महाभारते शान्तिपर्वणि (326-328) पर्यन्तं आसुरिकपिलयोः सम्वादस्योल्लेखेन स्पष्टं प्रतीयते यत् कपिलेन आसुरये तत्त्वज्ञानस्योपदेशो दत्त आसीत्। एवं महाभारते आसुरेः प्रसंङ्गवशाद् बहुषु स्थलेषु उल्लेखोऽस्ति। (12/220/10-13) सांख्य विषयकस्य कस्यचिद् ग्रन्थस्योल्लेखो नास्ति।

कीथ गर्वे प्रभृतयः पाश्चात्या विद्वांसः आसुरिमैतिहासिकं पुरूषं नाङ्गीकुर्वन्ति। परमेषां कथनं निराधारं विद्यते। संस्कृतसाहित्ये तस्य बहुत्र नामोल्लेखात् स नूनमास्ति ऐतिहासिकः पुरूषः।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

**पञ्चशिखः**

सांख्येतिहासे पञ्चशिखस्य स्थानं महत्त्वपूर्णमस्ति। ईश्वरकृष्णेन विदितं यत् तेन सांख्यशास्त्रमुद्दिश्य एको विशालः ग्रन्थो लिखित आसीत् यः षष्टितन्त्रनाम्ना प्रसिद्ध आसीत्। एतेषां विषयाणां एकं सूचिपत्रं अहिर्बुध्न्यसंहितायां सुरक्षितं प्राप्यते। एते तत्त्वसमासमुद्दिश्यात् भाव्यं लिखितमासीत्।

महाभारते पञ्चशिखस्य वंशस्य घटनायाश्च किमपि विवरणं प्राप्यते। एतस्य मातुः नाम कपिला इति आसीत्, यतः जनैः कपिलोऽयं इति उदीर्यते। कपिलस्य अनुगामित्वात् इदं उपनाम एतस्मै द्वयर्थकं सार्थकं वा प्रतीयते। अयं वृद्धपराशरस्य गोत्रजः तथा राज्ञा जनकेन गुरूः इति तदाभिधाने स्वीयं गौरवं अनुभूयते। अयं भिक्षावृत्या स्वकीयं जीवन यापयति स्म। अतः कतिपयैः जनैः भिक्षुः इति शब्देनापि अभिधीयते स्म। एतस्य शिक्षा-दीक्षा पञ्चनददेशे अभूत्। अयं पाञ्चरात्रसिद्धान्ते निष्णातः आसीत्, पञ्चविद्यानामयं प्रवीणः आसीत्। पञ्चप्रकारान् यज्ञान् विशेषरूपेण जानाति स्म। तथा पञ्चभिः गुणैः युक्तः आसीत् इति पञ्चशिखनाम्ना प्रसिद्धः आसीत्।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

**विविक्तू दृक्परिणतौ बुद्धौ भोगोस्य कथ्यते।**

**प्रतिबिम्बोदयः स्वच्छे यथा चन्द्रमसोऽमभसः।।**[1]

वामनपुराणे अयं ब्रह्मणः अष्टमानसपुत्रेषु परिगण्यते। तर्पण विधिः तर्पणीयदेवेषु पितृषु च। कूर्मपुराणे जैगीषव्यश्च गुरूः प्रतिपादितः वायुपुराणे माहेश्वरयोगस्य ज्ञाता, येन अनेन मोक्षः प्राप्तः इति कथितमभूत्।

महाभारतस्यानेकेषु स्थलेषु पञ्चशिखस्योल्लेखोऽस्ति। शान्तिपर्वणिः 220 अध्याये आसुरेः शिष्यरूपेण पञ्चशिखस्योल्लेखोऽस्ति। पञ्चशिखस्य शिष्येषु मिथिलाधिपो धर्मध्वजो जनकोऽन्यतमोऽभूत्। महाभारते पञ्चशिखजनकयोः संवादस्यस्य वर्णनमस्ति।

**पराशरस्य गोत्रस्थ बृद्धस्य सुमहात्मनः।**

**भिक्षोः पञ्चशिखस्याहं शिष्यः परम सम्मतः।।**

तत्र तेषां सिद्धान्तानामुल्लेखोऽस्ति, ये व्यक्तं सांख्यसम्बन्धाः सन्ति, ते तथैव सांख्यसूत्रे तत्त्वसमासे च वर्णिताः सन्ति।

वस्तुतोऽस्मिन् संवादे दार्शनिकरूपेण तत्त्वानां विवेचनाय कश्चित् प्रसङ्गो नास्ति, किन्तु केवलं जनकस्योक्त्या प्रतीयते यत् स आत्मानं सांख्ययोगाचार्य मन्यते स्म। सांख्यकारिका व्याख्याया युक्तिदीपिकाया

---

1 स्याद्वादमञ्जर्यां 15 पृष्ठे



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

आधारेण निश्चीयते यत् पञ्चशिखाचार्यस्थाने के शिष्याः समभूवन्। तेषु जनकवशिष्ठावपि आस्ताम् महाज्ञानिनौ।

**वशिष्ठः**

श्रीमदभागवतानुसारं वशिष्ठस्य परम्परा एवमुच्यते। ब्रह्मणो मानसपुत्रो वशिष्ठः। तस्यात्मजः शक्तिः। तदात्मजः पराशरः। तदात्मजश्च व्यासः। एवं ब्रह्मणः चतुर्थ्या परम्परायां व्यासस्यास्तित्वमुच्यते। व्यासोत्मजोऽमलात्मजा शुकदेवमुनिस्तु प्रसिद्ध एवास्ति, यो राजानं परीक्षितं श्रीमद्भागवतं श्रावयामास।

रामायणे त्रिशङ्कु कालिकस्य वशिष्ठस्य शतपुत्राणामुल्लेखोऽस्ति। विश्वामित्र द्वारा तेषां वधस्यापि तत्र चर्चाऽपि विद्यते।

अयं पञ्चशिखाचार्यस्य शिष्येषु अन्यतम आसीत्। पञ्चशिखाचार्यश्चास्मै सांख्यज्ञानं प्रददौ। महाभारतानुसारमयं हिरण्यगर्भतो योगविद्यामधिगतवान्[2] महाभारते अनुशासनपर्वणि महानयं शिवभक्तः प्रोक्तः। शान्तिपर्वणि सप्तसु अध्यायेषु वशिष्ठकरालजनकयोः संवादस्य विस्तृत वर्णनं विद्यते। वसिष्ठेन करालजनकाय सांख्ययोगतत्त्वानामुपदेशो दत्तः।[3] प्राचीन साहित्यस्यानुशीलनेन ज्ञायते यद् विशिष्ठनामानोऽनेके आचार्या

---

2 महा. (12/308/45)

3 महा. (302/9/228)



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

अभूवन्। बाल्मीकि रामायणपर्यालोचनया वसिष्ठ इक्ष्वाकु कुलपुरोहितः प्रतीयते। अत्र वंशे बहूभिः राजभिः सह तस्य सम्पर्को बभूव। दशरथस्यानेकेषु यज्ञेषु स उपस्थित आसीत्। रामायणस्योत्तरकाण्डे 55-56 अध्याययो निमिवशिष्ठयोरूल्लेखो विद्यते। इमौ परस्परं शापतो मृत्युमुपगतौ। वशिष्ठोऽत्र ब्रह्मणो मानसपुत्रः प्रोक्तः। तत्र ब्राह्मण आशीर्वादेन मित्रावरूणयोः वीर्यतो वसिष्ठस्य पुनरुत्पत्ति चर्चा कृताऽस्ति। अतः स मैत्रावारूणिर्वशिष्ठः प्रसिद्धः। भगवतो रामस्य गुरूस्तु वशिष्ठः प्रसिद्ध एवास्ति। महाभारतयुद्धकालेऽपि एकस्य वशिष्ठस्य उल्लेखोऽस्ति। परं वशिष्ठ करालजनकयोः संवादे प्रसङ्ग वंशात्सांख्यसिद्धान्तानां स्पष्टमुल्लेखो विद्यते नान्यत्र। महाभारते यथा प्रकृतिस्त्रिगुणात्मिका प्रोक्ता तथा सांख्यसूत्रेऽपि।[4]

**जनकः**

महाभारतस्य शान्तिपर्वणि 220-222 त्रयाणामध्यायानां वर्णनेन स्पष्टं प्रतीयते यत् जनकः पञ्चशिखस्य शिष्येषु अन्यतम आसीत्। मिथिलायां जनक नामानोऽनेके राजानो बभूवुः। तेषां जनकेतिनाम देशनाम्ना अजायत। जनकस्य देशस्य राजत्वात्ते जनकाः प्रोच्यन्ते। परन्तु तेषां वैयक्तिकं नाम भिन्नं भिन्नमासीत्। पञ्चशिख शिष्यस्य व्यक्तिगतनाम धर्मध्वजो जनक इति

4 सांख्यसूत्रे (126, 136)



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

आसीत्। विष्णुपुराणे धर्मध्वजस्य जनकस्योल्लेखोऽस्ति। धर्म ध्वजस्य पुत्रो अमित ध्वजः। तस्यात्मजौ ऋतध्वजः खाण्डिक्यजनकश्च। ऋतध्वजस्यात्मजः केशिध्वजः।[5]

विष्णुपुराणस्यास्मिन् प्रसङ्गे केशिध्वज आत्मविद्याविशारदः प्रोक्तः। तस्य पितृव्यः खाण्डिक्यजनकः कर्ममार्गी आसीत्। केशिध्वजेन खाडिक्यायात्मविद्याया उपदेशो दत्तः। केशिध्वजस्य प्रपितामहो खाण्डिक्यस्य च पितामहः धर्मध्वजजनक आसीत्। सुलभया योगिन्या सहास्य संवादः शान्तिपर्वणि 320 अध्याये विस्तरशो वर्णितोऽस्ति। प्रसङ्गेऽस्मिन् जनक आत्मानं सांख्यज्ञाने राजनीतौ च निपुणं प्रोक्तवान्। यथा शान्तिपर्वणि करालजनकाय वशिष्ठेन धर्मध्वजजनकाय पञ्चशिखाचार्येण च सांख्ययोगविषये उपदेशो दत्तः। राजा जनकः पञ्चशिखाचार्यात् सांख्ययोगज्ञानं प्राप्तवानिति युक्तिदीपिकातोऽप्यवगम्यते। विष्णुपुराणे सांख्ययोगानुगतः केशिध्वज- खाण्डिक्य संवादो जनकवंशीयराज्ञां सांख्ययोगविषयकं ज्ञानं स्पष्टं व्यनक्ति।[6] विष्णुपुराणीयः श्लोको योगभाष्येऽपि उपलभ्यते।[7]

---

5 वि.पु. (12/325/4)

6 वि.पु. (6/6/7)

7 योग. (1/28)



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

**याज्ञवल्क्यः**

सांख्याचार्यो याज्ञवल्क्यो दैवरातिजनकाय तद्द्वारा प्रश्ने कृते सांख्यतत्त्वानां विस्तरेणोपदेशो दत्तः।[8] संवादोऽयं भीष्मपितामहद्वारा पुरातन इतिहास इति कथयित्वा युधिष्ठिराय श्रावितः। अस्मिन् प्रसङ्गे याज्ञवल्क्येन तत्त्वानां सम्बन्धे य उपदेशो दत्तः, तस्य सांख्येन सहात्यन्तं सामञ्जस्यं वर्त्तते। अस्मिन् प्रकरणे चतुर्विंशति जडतत्त्वानामेकस्य पञ्चविंशतिकस्य चेतनस्य पुरुषस्य वर्णनमुभयत्र समानरूपेणोपलभ्यते परन्तु महाभारते षडविंशस्य पुरुषस्याप्युल्लेखोविद्यते। तस्य स्थितिं पञ्चविंशः पुरूषः तदैवानुभवति यदा स स्वयं कैवल्यस्थितिमुपगच्छति।

**तत्त्वानि च चतुर्विंशत् परिसंख्याय तत्त्वतः।**

**सांख्याः सह प्रकृत्या तु निस्तत्त्वः पञ्चविंशकः।।**

**पञ्चविंशोऽप्रकृत्यात्मा बुध्यमान इति स्मृतः।**

**यदा तु बुध्यतेऽऽत्मानं तदा भवति केवलः।।**[9]

याज्ञवल्क्यः स्वोपदेशे इदं रहस्यं स्पष्टयति यत् मूलं तत्त्वमेकं द्वे त्रीणि वा सन्ति। एक ईश्वरः द्वितीयः पुरुषः, तृतीया च प्रकृतिः।

---

8 महा.शा.प. (315/323- अध्याये)

9 महा. (12/306/43-44)



CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

विष्णुपुराणे अयं इक्ष्वाकुवंशीय हिरण्यनामतो योगविद्यां लब्धवानित्युक्तम्।[10] श्रीमद्भागवते सांख्याचार्यहिरण्यनामतो हृदयग्रन्थिभेदकम् योगं याज्ञवल्क्यो गृहीतवानित्युक्तम्।[11] ब्रह्माण्डपुराणे एतदेव समर्थयति।[12] हिरण्यनामः सामशाखाध्यायी कोसलदेशीयश्चासीत्। महाभारतेऽयं शतपथकारः प्रतीयते। कूर्मपुराणे याज्ञवल्क्यकृतं योगशास्त्रं स्मृतम्।[13] योगियाज्ञवल्क्यग्रन्थे पातञ्जलयोगानुसारं प्राणायामविवरणमुपस्थापितमस्ति।

**पुलस्त्यः**

अयं ब्रह्मणो मानसपुत्रः प्रोक्तः।[14] श्रीमद्भागवते कपिलस्य भगिनीपतिः प्रोक्तः। कर्दमस्य पुत्र्या हविर्भुजा सह पुलस्त्यस्य उद्वाहः अभवत्।[15] महाभारते मरीचिपुत्रः कश्यपः कपिलस्य भागिनेयः प्रोक्तः।[16]

**जैगीषव्यः**

कीथमहोदयेन लिखितमस्ति यत् कूर्मपुराणवर्णनानुसारं जैगीषव्यः पञ्चशिखस्य सहाध्यायी आसीत्। अस्यां स्थितौ देवल-जैगीषव्य-

---

10 वि.पु. (4/4/8)

11 श्रीमद् भा. (7/12/3-4)

12 ब्रह्मा.पु. (2/63/207-208)

13 कू.पु. (1/25/44)

14 महा. (6/10)

15 श्रीमद् भा. (3/24/22)

16 महा. (1/63/3)



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

पञ्चशिखाः समकालीनाः सिध्यन्ति। महाभारताज्ज्ञायते (42/220/10) यत् पञ्चशिखोऽतिदीर्घजीवि आसीत्, तस्यान्तिमे समये सम्भाव्यते यत् जैगीषव्यस्य तेन सह साक्षात्कारो जातः, तथा तदैव तेन योगविद्यायाः अभ्यासः कृतः स्यात्। जैगीषव्येन दृढ़ाभ्यासात् समाधिसिद्धि-रधिगताऽऽसीत्। देवलो जैगीषव्यसहयोगादेव वैराग्यं लब्धवान् सांख्यज्ञानं च तत एव प्राप्तवान्। अग्निपुराणेऽप्यस्यैवं चर्चा कृताऽस्ति।

**कर्त्तव्यमिति यत्कर्म ऋग्यजुः सामसंसितम्।**

**कुरूते श्रेयसे संगाज्जैगीषव्येन गीयते।[17]**

पातञ्जलयोगसूत्रस्य व्यासभाष्ये तत्त्ववैशारद्यां वाचस्पतिमिश्रेण जैगीषव्यः परमर्षिः प्रोक्तः। किञ्च चितैकाग्र्यादविप्रतिपत्तिरिति जैगीषव्य इति सन्दर्भो: जैगीषव्यनाम्ना अङ्कितोऽस्ति। किञ्च न्यायवार्तिकटीकायां (3/2/42) मिश्रेण धारणाशास्त्रं जैगीषव्यादिप्रोक्तमित्युक्त्वा जैगीषव्यस्यापि कयाचित् रचनाया भाव्यमित्त्युक्तम्। योगभाष्ये (3/18) अवाट्यजैगीषव्यसंवादानुशीलनेन प्रतीयते, यत् जैगीषव्येन समाधिसिद्धिरधिगताऽऽसीत्। महाभारते शल्यपर्वणि 51 अध्याये उल्लेखोऽस्ति यत् जैगीषव्येनासितदेवलसम्मुखे स्वसिद्धिः प्रदर्शिता, तथा उभया सह रूद्रश्चकितीकृतः।[18]

---

17 अ.पु. 1/7/31)

18 महा. श. प. 12/236



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosh

लिङ्गपुराणे (1/92/52-53), वायुपुराणे (23/138, 72/18) मत्स्यपुराणे (180/57-58) स्कन्दपुराणस्य काशीखण्डे 63 कुमारिका खण्डे (11/152) कूर्मपुराणे (1/48) च जैगीषव्यः श्रेष्ठो योगी शिवयोगी च प्रोक्तः। आदित्यतीर्थमहिमप्रसङ्गे महाभारतस्य शल्यपर्वणि जैगीषव्यस्य चरितं वर्णितमस्ति। शान्तिपर्वणि (229/7-25) असितदेवलं प्रति समत्वबुद्धिविषयक उपदेशो दृश्यते। अनुशासन पर्वणि च (18/37)। शिवविषयकोऽस्यानुभवो वर्णितोऽस्ति।

**देवलः**

महाभारते सभापर्वणि देवलस्योल्लेखः प्राप्यते।

**भीणी ज्योतिषि पुरूष इति वै देवलोऽव्रवीत्।**

**अपत्यं कर्म विद्या च यतः सृष्टाः प्रजास्ततः।।**

वायुपुराणे योगिनः स्वरूपं स्पष्टयितं द्वौ श्लोकौ प्राप्येते।

**आत्मनः प्रतिरूपाणि परेषां च सहस्त्रशः।**

**कुर्याद्योगबलं प्राप्य तैश्च सद्वैः सहाचरेत्।।**

**प्राप्नुयाद् विषयांश्चैव तथैवोग्र तपश्चरन्।**

**संहरेच्च पुनः सर्वान् सूर्यतेजो गुणानिव।।[19]**

श्लोकाविमौ कृत्यकल्पतरौ मोक्षकाण्डे 218 पृष्ठे देवलनाम्ना उद्धृतौ स्तः।

---

[19] वा.पु. (66/151-152)



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

अयं सांख्ययोगवेत्ता धर्मसूत्रकारश्चासीत्। एतस्य सांख्ययोगसिद्धान्त-प्रतिपादकानि बहूनि वचनानि कृत्यकल्पतरौ मोक्षकाण्डे याज्ञवल्क्यस्मृतेः प्रायश्चित्ताध्याये 109 श्लोके अपरादित्यरचितायामपरार्करव्यायां व्याख्यां सांख्ययोगसम्बन्धी विपुलकाय एकः सन्दर्भ उद्धृतोऽस्ति। तत्र देवलेन समस्ताः सांख्यसिद्धान्ता गृहीताः।

महाभारतस्य सभापर्वणि युधिष्ठिरस्य सभाप्रवेशसमये अनेकैः ऋषिभिः सह असितस्य देवलस्यापि उपस्थितिः प्रदर्शिताऽस्ति। [20] शल्यपर्वणि इदं वर्णनं प्राप्यते यद् देवलो जैगीषव्यस्य योगप्रभावेण गार्हस्थकर्म परित्यज्य सन्यासधर्मं गृहीतवान्।

पाण्डुरङ्गवामनकाणेमहोदये [21] देवलो वृहस्पति-कात्यायनसमकालीनः कथितः। तथा तेन तस्य समयो विक्रमस्य तृतीयशताब्दी निश्चितः। उदयवीरशास्त्री[22] तु देवलस्यायं समयः सर्वथा असंगत इति ब्रवीति। यतो हि स महाभारतबुद्धाभ्यामपि पर्याप्तः प्राचीनोऽस्ति। पुराणेतिहास-पर्यालोचनयापि स महाभारतयुद्धादतिप्राचीनः प्रतीयते।

---

20 महा. (स. प. 4/16)

21 हिस्ट्री ऑफ धर्मशास्त्र पृ. 120-121

22 सांख्यदर्शन का इतिहास पृष्ठ 505



CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri

## असितः

ब्रह्मवैवर्तपुराणे असितस्य वर्णनं पुत्रार्थितपस्विरूपेऽस्ति।[23] देवनिमित्तकत्वादयं देवल इति नाम्ना प्रसिद्धो जातः। एवं देवल एतत्पुराणानुसारमसितस्य पुत्रः सिद्धयति। अग्निपुराणे स्वयम्भुवंशवर्णनप्रसङ्गे धर्मपुत्रः प्रत्यूषः त्रयोदश परम्परायामागच्छति।[24] देवलः तस्यैव पुत्रः प्रोक्तः। महाभारते शान्तिपर्वणि असितदेवलयोर्द्वयोराचार्ययोरभेदस्थापनाय प्रयत्नः कृतः।[25]

**आसीनं देवलं वृद्धं बुद्ध्वा बुद्धिमतां वरः।**
**नारदं परि पप्रच्छ भूतानां प्रभवाप्ययम्।।**

कियन्तः समालोचका असितेति पदं देवलस्य विशेषणं मत्त्वा असित देवल इति एकव्यक्तेरेव नाम निर्धारयन्ति। अन्ये चासितो भिन्नो देवलश्च भिन्न इति कथयन्ति। गीतायां असितो देवलश्चैव इत्यत्र असित देवलयोर्द्धयोः सङ्केतः प्राप्यते।[26] ब्रह्मवैवर्तपुराणे आस्तिको देवलस्तथा इति प्रयोगोऽस्ति।[27] एतेनासितस्यास्तिक इत्यपि नामान्तर ज्ञायते। अत्रदेवलाष्टावक्रयोरभेदः प्रदर्शितोऽस्ति।

---

23 ब्र.वै.पु. (4/30)

24 अ.पु. (18/440)

25 महा.शा.प.अ. 272

26 गीता (10/13)

27 ब्र.वै.पु. (2/4/60)



CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri

एतदनुसारं गन्धमादनपर्वते देवलः तपस्यन्नासीत्। तं पथभ्रष्टं कर्तुं रम्भा नाम्नी अप्सरा समुपस्थिता। स्वमनोनीतकार्याद् देवलं विरतं दृष्टवा सा विकृतरूपोपलब्धये तस्मै शापं दत्तवती। ततः तच्छापवशः स देवलर्षिरष्टावक्रो जातः।

यशोदाद्वाराप्रस्तुतायां आचार्यसूच्यां देवलाष्टावक्रकौ व्यक्तिद्वयरूपे उल्लिखितौ स्तः। एतयोरन्तरे महद् व्यवधानमस्ति, येनानयोः विशेषविशेषणभावोऽसम्भव। अस्यां सूच्यामास्तीकस्यापि नामास्ति। अयमास्तीकादभिन्नो वक्तुं शक्यते।

एतेनासितदेवलो एक एव सिद्धयतः। एवमपरिहार्य विरोधिवर्णनं दृष्ट्वा असितदेवलयोर्विषये किञ्चन्निश्चितं सिद्धान्तं स्थिरीकर्तुं न शक्यते। कल्पसिद्धान्ताधारेण विभिन्नवर्णनेषु सामञ्जस्य स्थापयितुं शक्यते, किन्तु एतयोरैक्यप्रतिपादकस्थलानां गतिस्तु चिन्त्यैवास्ति। भारते शल्यपर्वणि 51 असितदेवलौ वर्णितौ स्तः। एतदनुसारं असितेन स्वयोगसिद्धिप्रदर्शनद्वारा रूद्रदेवलौ निम्नतां नीतौ।

पुराणेतिहासानुसारमिदं सिध्यति यद् असितदेवलौ पूर्वकालतः प्राचीनर्षिरूपेण स्वीकृतौस्तः। देवलस्यैका स्मृतिरपि प्रसिद्धाऽस्ति, या सांख्यसिद्धान्तैरोक्तप्रोक्तास्ति।



CCO. Vasishtha Tripathi Collection. By Siddhanta eG...

**नारदः**

महाभारतस्य शान्तिपर्वणि महर्षिणा वसिष्ठेन प्रोक्तौ सांख्ययोगौ नारदसकाशाद् भीष्मपितामहेन प्राप्तावित्युक्तम्।[28] किञ्च (12/329/331) अध्यायेषु व्यासात्मजशुकदेवमुनिमुद्दिश्य ज्ञानविज्ञान प्रतिपादिका योगनुसारिणो नारदोपदेशा महत्त्वपूर्णाः सन्ति। अतोऽयमपि सांख्ययोगाचार्य इत्यत्र न काचित् संशीतिः। अयं नारदो देवर्षिनारदाद्भिन्नः प्रतीयते।

**व्यासः**

कृष्णद्वैपायनो महर्षिव्यासो महाभारतस्य शान्तिपर्वणि चतुर्विंशत्यध्यायेषु स्वात्मज भगवन्तं शुकदेवं प्रति यदुपदिष्टवान् [29] , तत्सर्वं सांख्ययोगानुसारमेवास्ति। अतोऽयमपि सांख्ययोगाचार्य आसीदित्यत्र नास्ति शङ्कापङ्कलङ्कलेशः।

**हारीतः**

माठरवृतौ निर्दिष्टानां सूच्यां सांख्याचार्यस्य हारीतस्योल्लेखोऽस्ति। महाभारतेऽप्यस्याप्यनेकेषु स्थलेषु वर्णनमुपलभ्यते। कृत्यकल्पतरौ मोक्षकाण्डे हारीतनाम्ना अनेके सन्दर्भा उद्धृता उपलभ्यन्ते। यत्र वानप्रस्थयतिधर्मादीनां वर्णनमस्ति।

---

28 महा.शा.प. (308/44)

29 महा. (231/254)



CCO. Vasishtha Tripathi Collection. By Siddhanta eG...

युक्तिदीपिकाख्यायां सांख्यकारिकाव्याख्यायां वार्षगण्यपलञ्जलि-गौतम-गर्ग-वाद्धक्ति-कैरात-पौरिकऋषभदेव-पञ्चाधिकरण-कौण्डिन्यमूकानां सांख्याचार्याणां नामानि निर्दिष्टानि। एषामाचार्याणामियं सूची कालक्रमानुसारं नोपस्थापिताऽस्ति, किन्तु इदं निश्चप्रचं वक्तुं शक्यते यदि मे आचार्या महाभारतयुद्धानन्तरम् ईश्वरकृष्णात् पूर्वभाविनः सन्ति।

**उलूकः**

उलूकात् औलुक्यदर्शनं प्रसिद्धिं गतम्। यस्य विस्तरः कणादऋषिणा पश्चाद् कृतः। पूर्व अयं सांख्यस्य आचार्यः आसीत्, पश्चाद् अनेन सांख्यस्य अन्तिमानि तत्त्वानि एकस्मिन् नवीने क्रमे विनिवेश्य एकं नूतनं दर्शनं उपस्थापितम्। उलूकस्य सांख्यार्चत्वे त्रीणिप्रमाणानि उपलभ्यन्ते-

1 प्रथमं प्रमाणं चीनानुवादेन प्राप्तः परम्परायास्तियदनुसारेण अनेन गर्गात् पश्चात् स्थानं प्राप्यते।

2 द्वितीयं प्रमाणं माठरवृत्तिरस्ति, या इमं भार्गवात् अनन्तरं कथयति। अत्रापि भार्गवः पञ्चशिखादनन्तरं रक्ष्यते। अयं पञ्चशिखात् तृतीयचार्यत्त्वेन परिगण्यते।

3. तृतीयं प्रमाणं वायुपुराणस्यास्ति यत् प्रतिपादितमस्ति यत् अयं महान् योगी, महात्मा तथा निर्मलबुद्धिरासीत्।



CCO. Vasishtha Tripathi Collection. By Siddhanta eG...

# तृतीयोऽध्यायः

## वार्षगण्यः

वार्षगण्यः सांख्ययोगस्य विश्रुतः आचार्यः आसीत्। अस्य नाम महाभारतस्य सांख्याचार्याणां सूचौ प्राप्यते। चीन परम्परायां तिब्बतपरम्परायाञ्च-अस्य शब्दस्य नाम वृषः वृषगणो वा प्राप्यते यः संस्कृत वर्षस्य वार्षगण्यस्य वा विकृतं रूपं प्रतीयते।

कथासरित्सागरे बार्षगण्यस्योल्लेखोऽस्ति। स च (व्याद्रि) भगवतो वर्षस्यशिष्यो नन्दसमकालीनः पाणिनिसूत्राणां संग्रहाख्यटीकायाः, कस्यचित् कोषस्य च कर्ता दाक्षायणेः पतञ्जलेरपि पुरोगामी सांख्ययोगाचार्यः।[1] युक्तिदीपिकायाम् (108 पृष्ठे), सांख्यतत्त्वकौमुद्याम् 47 कारिकायां, योगसूत्रस्य व्यासभाष्ये (3/52) भामत्यां (2/1/3) लाट्यायनश्रौतसूत्रे (10/9/10), निदानसूत्रे (33 पृष्ठे) वार्षगण्यस्य चर्चा कृताऽस्ति।

माठराचार्येण सांख्यस्य गुरूशिष्यपरम्परा एवमुक्तास्ति। कपिलादासुरिणा सांख्य प्राप्तम्, ततः पञ्चशिखेन प्राप्तम्। ततो भार्गव-उलूक-वाल्मीकि-हारीत- देवलप्रभृतिभिः प्राप्तम्, ततः ईश्वरकृष्णेन प्राप्तम्। एतेन देवलेश्वरकृष्णयोर्मध्येऽनेके आचार्या अभूवन्। येषामस्यां

---

1 क.स.सा. 1-2



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri G

परम्परायां नामोल्लेखो नास्ति। माठरानुसारं कपिल-आसुरि-पञ्चशिखानामविच्छिन्न परम्परातिरिक्तं भार्गव-उलूक-वाल्मीकि-हारीत-देवलानां साक्षान्नाम निर्दिष्ठ वर्त्तते। जयमङ्गलायां गर्गगौतमावपि स्मृतौ स्तः। युक्तिदीपिकाकारेण सांख्यमतस्वीकर्तृष्वाचार्येषु मनुनारायणद्वैपायना अपि उल्लिखिताः सन्ति।

## पतञ्जलिः

पतञ्जलिनामनोऽनेके आचार्या अभूवन्। योगसूत्रकारः, निदानसूत्रकारः, महाभाष्कारः, परमार्थसारकारः, कोशकारः, चरकप्रतिसंस्कर्ता सांख्याचार्यश्च। युक्तिदीपिकायामुद्धृतः पतञ्जलि योगसूत्रकाराद् व्याकरणभाष्यकारात् चरकप्रतिसंस्कर्तुश्च पतञ्जलेः सर्वथा भिन्न एवास्ति। सांख्येऽस्यैका स्वतन्त्रा विचारधारा प्रचलति। अयमहङ्कारस्य पृथक्सत्तां न स्वीकरोति, किन्तु महत एवं एकादेशेन्द्रियाणां पञ्चतन्मात्राणाञ्च उत्पत्ति स्वीकरोति। परं योगसूत्रकारो भगवान् पतञ्जलिः महतोऽहङ्कारस्य तत इन्द्रियाणं पञ्चतन्मात्राणाञ्चोत्पत्तिमङ्गीकरोति। एवं पतञ्जलि विषये महान् मतभेदोऽस्ति।

व्याकरणे शब्दानुशासनं कुर्वता, पातञ्जलसूत्रेषु वृतिं रचयिता राजमृगाङ्काभिधं वैदिकग्रन्थो प्रणयता येन भोजदेवेन मया फणिमृतां भर्त्रेव पतञ्जलिना वाक्चेतोवपुषां (वाणी-बुद्धि-वपुषाम्) मंलः फणिमृतां भर्त्रैव



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri

येनोद्धृतः, इति ब्रुबन् भोजराजः स्ववृतौ योगसूत्रकारो महाभाष्यकारश्चरकप्रतिसंस्कर्ता चेति त्रीनपि एक एव व्यक्तिं भगवन्तं पतञ्जलि मनुते।

**शब्दानामनुशासनं विदधता पातञ्जले कुर्वता।**

**वृत्तिं राजमृगाशाङ्कसंसकमपि व्यातन्वता वैद्यके।**

**वाक् चेतो वपुसां मताः फणिभृता भर्त्रैव येनोद्धृत।**

**स्तस्य श्रीरणरङ्गमल्लनृपतेर्वाचो जयन्त्युज्ज्वलाः।। (भोजराजः)**

भर्तृहरिरपि वाक्यपदीये (1/147) एतदेव स्वीकरोति। वाक्यपदीयव्याख्कारः पुण्यराजोऽपि चिकित्साशास्त्रं (चरकम्), लक्षणशास्त्रं (व्याकरण भाष्यम्), अध्यात्मशास्त्रं (योगम्) चैव निर्दिशन् एषां त्रयाणां रचनया पतञ्जलिना शरीरवाणी-बुद्धीनां दोषा दूरीकृता इति मन्यते। अतः एक एव पतञ्जलिः त्रयाणां रचयिता सिद्धयति। अतः एव चक्रपाणिना चरकटीकाया आरम्भं कुर्वता कृतं मङ्गलाचरणं संगच्छते।

**योगेन चित्तस्य पदेन वाचा मलं शरीरस्य वद्यकेन।**

**योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽहम्।।**

महाराजसमुद्रगुप्तरचिते कृष्णचरिते महाकाव्ये पतञ्जलि विषयकौ द्वौ श्लोकौ उपलभ्येते। ताभ्यां स्पष्टं प्रतीयते यत् पतञ्जलेः सम्बन्धः व्याकरणेन चरकेण योगविषया चावश्यमासीत्।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri

बर्लिनसूचीपत्र-मैक्समूलरयोरनुसारं कात्यायनसर्वानुक्रमणीव्याख्याकर्ता षड्गुरूशिष्येण प्राप्यते।[2]

अत्र पतञ्जलिर्व्याकरण भाष्ययोगसूत्रनिदानरूपाणां प्रणेता स्वीकृतोऽस्ति। परन्तु मैकडानल द्वारा सम्पादितकात्यायनसर्वानुक्रमणीटीकायां वेदार्थ दीपिकायां न पूर्वोक्तः श्लोक उपलभ्यते। मैक्समूलरेण कुतो गृहीत इति स एवं जानातु इति उदयवीरशास्त्रिणां मतम्।[3]

रामगोविन्दत्रिवेदिना एक एवं पतञ्जलिः योगसूत्रस्य महाभाष्यस्य च कर्ता स्वीकृतः। वासुदेवशास्त्रिणा अभ्यङ्करेणापि एतदेव समर्थितम्। पुनरपि चरकव्याख्याकारः चक्रपाणिरपि पातञ्जलयोगदर्शन-व्याकरणमहाभाष्य-चरकप्रतिसंस्कारद्वारा मनोवाणी-देहदोषदूरकर्तातरतम् पतञ्जलिं नमस्कुर्वन् एतदेव समर्थयति।

**पातञ्जल महाभाष्यचरकप्रतिसंस्कृतेः।**
**मनो वाक्कायदोषाणां हन्त्रेऽहिपतये नमः।।**[4]

अपि चाच्युतग्रन्थमालाकाशीतो मुद्रितस्य परमार्थसारस्य प्रारम्भिके वक्तव्ये तत्सम्पादकेन श्रीसूर्यनारायणशुक्लमहोदयेन महाभाष्य-योगसूत्रयोः

---

2 यत् प्रणीतानि वाक्यानि भगवांस्तु पतञ्जलिः।
व्याख्याच्छान्तनवीयेन महाभाष्येण हर्सितः।
योगाचार्यः स्वयंकर्त्ता योगशास्त्रनिदानयोः।।

3 सांख्यशास्त्र इतिहासे (511 पृष्ठ)

4 दर्शन परिचयः, पृष्ठ 79-186



CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri

रचयिता चरकस्य च प्रतिसंस्कर्ता पतञ्जलिरेव परमार्थसारस्यापि प्रणेतास्तीत्युक्तम्, परन्तु अस्य विचारस्य पुष्ट्यै नाद्यावधि किञ्चिदैतिहासिकं प्रमाणमुपलब्धम्। नापि शुक्लमहोदयेनास्य कश्चिदाधार उपन्यस्तः।

अतः सांख्याचार्यपतञ्जलेः योगसूत्रादिकर्ता पतञ्जलिः सर्वथाऽस्ति भिन्नव्यक्तिः। सांख्याचार्यस्य पतञ्जलेरनेकेषां मतानामुल्लेखो युक्ति दीपिकायामुपलभ्यते। यदनुशीलनेन निश्चीयते यत्परमार्थ सारकर्तुः पतञ्जलेः सांख्याचार्यस्यपतञ्जलिः भिन्नोऽस्ति। युक्तिदीपिकायामुपन्यस्तादेतन्मताद् ज्ञायते यदयं पतञ्जलिः महदहङ्कारौ एकं तत्त्वं मत्त्वा करणानां संख्या 12 स्वीकृता-एवं तर्हि नैवाहङ्कारो विद्यते इति पतञ्जलिः (युक्तिदीपिकापृष्ठ 32 पंक्ति 1-2) करणं द्वादशविधं (युक्तिदीपिकापृष्ठ 132), परन्तु परमार्थसारेऽन्यसांख्याचार्यवत् 13 करणानि स्वीकृतानि। एतदतिरिक्तं सांख्याचार्याणां साधारणं मतमस्ति यत् सर्गादौ प्रतिपुरूषं एकस्य शरीरस्य सम्बन्धो भवति तदेवाप्रलयं आहोश्वित् तत्त्वज्ञानपर्यन्तं तिष्ठति, परन्तु युक्तिदीपिकायां वर्णितः सांख्याचार्यपतञ्जलिः एतन्मतं न मनुते। स स्थूलदेहस्योत्पत्तिविनाशवत् सूक्ष्मशरीरस्योत्पादविनाशावपि स्वीकरोति।[5]

5 युक्तिदीपिका, पृष्ठ 144-145



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan

## कौण्डिन्यो मूकश्च

ईश्वरकृष्णकृतायां सांख्यकारिकायां 71 कारिकाया युक्तिदीपिकायां कौण्डिन्यमूकयोरपि आचार्ययोरुल्लेखोऽस्ति। परमनयोः सम्बन्धे एतदेव वक्तुं शक्यते यद्युक्तिदीपिकामन्यैः आचार्यैः सहैतयोरपि नाम्नी निर्दिष्टे स्तः। नानयो सम्बन्धे किञ्चिदन्यत् ज्ञायते।

उदयवीर शास्त्रिणो मतानुसारं युक्तिदीपिकायां यत्र सांख्याचार्याणामुल्लेखोऽस्ति तत्र कियान् पाठः खण्डितोऽशुद्धश्चास्ति एतस्य विचारे मूकस्थाने शूक इति पाठः समीचीनः सम्भवति।

सांख्याचार्याणामिमां सूचीं पूर्णां कथयितुं न शक्यते, सम्भवतोऽनकेषामाचार्याणां नामानि तत्र विस्मृतानि स्युः। तत्र वर्णितेषु आचार्येषु बहूनां नामानि पुराणेतिहासप्राचीनसाहित्येभ्यः सांख्यकारिका-टीकाभ्यश्च संगृहीतानि सन्ति। येषामुल्लेखः पञ्चशिखानन्तरमीश्वरकृष्णात् पूर्ववर्तिनीं गुरूशिष्यपरम्परां बोधयितुं कृतोऽस्ति। अत इमे सांख्याचार्याः ईश्वरकृष्णात् पूर्ववर्तिन इति निश्चप्रचं मतमस्ति।

## विन्ध्यवासी:

प्रसङ्गवशादेकस्येश्वरकृष्णपरवर्तिनोऽपरस्य सांख्याचार्यस्य विन्ध्यवासिन उल्लेखः आवश्यकः प्रतीयते, यस्य नाम्ना अनेके सन्दर्भा युक्तिदीपिकायाः (3, 4, 108, 144) पृष्ठेषु उपलभ्यन्ते।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri

हरिभद्रसूरिकृतषड्दर्शनसमुच्चयस्य गुणरत्नसूरिकृतव्याख्यायाः 104 तथा स्याद्वादमन्जर्याः 15 पृष्ठे, विन्ध्यवासी त्वेवमाचष्टे।[6]

कमलशीलकृततत्त्वसंग्रहपञ्जिकायाः 22 पृष्ठेऽपि अस्य नामास्ति।[7]

योगसूत्रस्य भोजवृतौ (4/22) अनेनैवाभिप्रायेण विन्ध्यवासिनोक्तं सत्त्वतप्यत्वमेव पुरुषतप्यत्वमित्युक्तम्।

दिवाकरकृतसन्मतितर्के मयदेवसूरिकृतव्याख्यायाः 533 पृष्ठे, शास्त्रवार्तासमुच्चयस्य टीकायाः शास्त्रवार्तासमुच्चय स्याद्वादकल्पलतायाः 1089 पृष्ठे मनुस्मृतेः मेधातिथिभाष्ये च (1/55) विन्ध्यवासिनो मतस्योल्लेखो विद्यते।

## रूदिलः

विन्ध्यवासिनः वास्तविकं नाम रूद्रिल आसीत्। विन्ध्याट्व्यां निवास्त्वादेवास्य नाम विन्ध्यवासीति प्रथितम्। हेमकोषानुसारं व्याडेरेव नाम विन्ध्यवासी आसीत्।

---

6 पुरुषो विकृतात्मैव स्वानिर्मसिमचेतनम्।
मनः करोति सान्निध्यादुपाधिः स्फटिकं यथा।। (स्याद्वादमञ्जर्याम्)

7 यदेव दधि तत्क्षीरं यत् क्षीरं तद्दधीति च।
वदता रूदिलेनैव स्थापितौ विन्ध्यवासि ता।। (तत्वसंग्रहे)



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan...

## ईश्वरकृष्णः

सांख्यकारिकायाः कर्त्ता ईश्वरकृष्णोऽस्ति। स चैकसप्तत्यां कारिकायां स्पष्टतयोल्लिखितः।

**शिष्यपरम्परया आगतमीश्वरकृष्णेन चैतदार्याभिः।**

**संक्षिप्तमार्यमतिना सम्यविज्ञाय सिद्धान्तम्।।**[8]

परञ्चासौ ईश्वरकृष्णः कोऽस्ति कदा कुत्रोत्पन्ना इति निश्चिततया नैव किञ्चिदद्विजायते। सांख्यस्य क्षेत्रेऽस्य महती प्रतिष्ठा विद्यते। अनेके विद्वांसः ईश्वरकृष्णस्य कालविषये स्वमतान्युपस्थापयां चक्रुः। भिक्षुपरमार्थः 570 ख्रिष्टाब्दे सांख्यकारिकाणां 'हिरण्यसप्ततिः' इति टीकां लिखत् या च टीका 'हिरण्यसप्ततिः' कनकसप्ततिः वेति कथयन्ति विद्वांसः। डॉ. तकाकुसुः इममीश्वरकृष्णं विन्ध्यवासादभिन्नं सिद्धं कर्तुं प्रायतते। डा. तकाकुसुः 557-566 ख्रिष्टाब्दयोर्मध्ये भिक्षुणा परमार्थेन लिखितं वसुबन्धोश्चरितं 570 ख्रिष्टाब्दे लिखिता सांख्यकारिकाणां 'हरिण्यसप्ततिरित्याख्येयां टीकां समाश्रित्यानुमियाय यत् ईश्वरकृष्णस्य जन्म 450 ख्रिष्टाब्दस्य सन्निधौ बभूव।

परञ्चास्मान्मताद्विपरीतं डा. विन्सेण्टस्मिथमहोदय ईश्वरकृष्णं वसुबन्धो प्राक् स्वीकरोति। तदनुसारं वसुबन्धोः समयः 328-360

---

8 सां.का. 71



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri

ख्रिष्टाब्दोऽस्ति। ईश्वरकृष्णस्य च समयं 340 ख्रिष्टाब्दस्य सन्निधौ स्थापयति। डा. विद्याभूषणमहोदयः तिब्बतीग्रन्थानां सुरक्षितानां कासाञ्चिदनुश्रुतीनां परीक्षणं कृत्वा ईश्वरकृष्णसुबन्धु समकालीनाविति सिद्धमकरोत्। तयोश्च स्थितिकालः 400 ख्रिष्टाब्द आसीदित्यमन्यत्।[9]

कीथमहोदयः कथयति यत् ईश्वरकृष्णस्य समयः 300 ख्रिष्टाब्दपश्चात् न शक्यते। डा. दासगुप्तमहोदय ईश्वरकृष्णस्य समयं 200 ख्रिष्टाब्दः एवं गार्वे महोदय तस्य समयं 100 ख्रिष्टाब्दः इति कथयति। कालिपदभट्टाचार्यः एकस्मिन् निबन्धेऽलिखत् यत् ईश्वरकृष्णः ख्रिष्टप्रथमशतके बभूवः। परञ्च महामहोपाध्यायः गोपीनाथकविराजस्य मतमनुश्रित्यैश्वरश्वरकृष्णाऽस्मादपि पूर्ववर्ती विद्यते। यतो हि प्रसिद्धे जैनग्रन्थेऽनुयोगद्वारसूत्रे (100 ख्रिष्टाब्दः) वैदिक-परम्परायाः ग्रन्थानां सूची विद्यते। तस्यां सूच्यां 'कापिल' 'षष्ठितंत्रम्' 'माठर' इत्येतैः सह कणसत्तरी इत्यस्या उल्लेखो वर्त्तते। यत् सांख्यकारिकायाः चीनी-भाषायां 'कनकसप्ततिरिति' नाम प्रतीयते। यदि अनुयोगद्वारस्य कालः ख्रिष्टाब्दपूर्वं प्रथमं शतकं वर्त्तते तर्हि नास्ति किञ्चित्कारणं यत् ईश्वरकृष्णस्य काल ख्रिष्टाब्दपूर्वं न मन्यते। अर्थात् तस्य कालः न्यूनतया ख्रिष्टपूर्वं

9 वाचस्पतिगैरोला, भारतीयदर्शन, पृष्ठ 261



CC0. Vasishtha Tripathi Collection. By Siddhanta eGan...

प्रथमशतकमेव मन्तव्य इति। श्री वैल्करमहोदयः ईश्ररवकृष्णस्य समयं खिृष्टाब्दप्रथमशतकस्य सन्निधावित्यनुमिनोति।

डा. त्र्यम्बक-गोविन्द-माईणकरमहोदय सांख्यकारिकाणां आभ्यान्तरमेवं बाह्यं साक्ष्यं समाश्रित्यासाः रचयितारमीश्वरकृष्णं कविकुलगुरुं कालिदासं चाभित्रमेव स्वीकरोति। तन्मते विन्ध्यतारा एव ईश्वरकृष्णोऽस्ति यो वार्षगणस्य शिष्य आसीत्। असादेव च सांख्य-सप्ततिं रचयाम्बभूव। समुद्रगुप्तो गुप्तसम्राट् तं सुवर्णेन पुरस्कृतमकरोत्। अतः तस्या नाम हिरण्यसप्ततिः सुवर्णसप्ततिः वेति सञ्जातम्। यदद्यत्वेऽपि चीनीपरम्परायाम् अक्षुण्णं वर्त्तते। सः उत्तररामचरितस्य टीकाकर्तोर्घनश्यामराजशेखरयोः उल्लेखः समाश्रित्येदं सिद्धमकरोत्। असौ समुद्रगुप्तस्य चन्द्रगुप्त द्वितीयस्य च समये विद्यमान आसीत्।

डा. त्र्यम्बक-गोविन्द-माईणकरमहोदयस्य कल्पनेश्वरकृष्णस्य विषये यदसावेव कालिदासो समं कण्ठो विन्ध्यवास इति विचारणीयैव। अनुयोगद्वारसूत्रमितीयं ग्रन्थमनुश्रित्यास्मात्प्राणीश्वरकृष्णस्य कालः न्यूनतया खिृष्टपूर्व-प्रथम-शतकमेव स्वीकर्तुं शक्यते।

**माधवः**

यद्यपि तत्तत्सांख्यग्रन्थेषु उपलब्धसांख्याचार्याणां सूचीषु सांख्याचार्यमाधवस्योल्लेखो नास्ति, परन्तु अन्येषु ग्रन्थेषु सांख्याचार्यरूपेण



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri G...

माधवस्य नामोपलभ्यते। माधवोऽयं परिव्राजकमाधवात् सर्वथाऽस्ति भिन्नः। मीमांसाश्लोकवार्तिकस्योम्वेकभट्टकृतव्याख्यायां चोदनासूत्रश्लोके (249) हिंसा यज्ञीया अधर्मजनिका नवेति प्रसङ्गे सांख्यमतप्रकटनपूर्वकं निर्णीतमस्ति यद् यज्ञीयाऽपि हिंसाऽवश्यमधर्ममुत्पादयति। अत एवं गीतायां 'यज्ञानां जपयज्ञोऽस्मि' (10/25) इत्यनेनाहिंसाजनकत्वाद् जपयज्ञस्य प्राशस्त्यमुक्तम्। उम्बेकेन प्रसङ्गगतस्य श्लोकस्य व्याख्यां कुर्वता लिखितमस्ति यत् सांख्यनायको माधवस्त्वाह - अनेन स्पष्टं प्रतीयते यदुम्बेकः सांख्याचार्यमाधवदस्ति सम्यक् परिचितः।

बौद्धग्रन्थे धर्मकीर्तिप्रणीतप्रमाणवार्तिकस्य व्याख्यां कुर्वता कर्णगोमिना लिखितं यद् आहो पुरूषिकयेत्यहं भावित्वेन यथा सांख्यनाशकमाधवेन सांख्यसिद्धान्तस्य अन्यथा रचनं कृतम्। उम्बेकः यं माधवं सांख्यनायकं वदति तमेव कर्णगोमी सांख्यनायकं कथयति। अत्रेदं रहस्यम् -

माधवपूर्ववर्तिभिर्बौद्धविद्वद्भिः कपिलसिद्धान्तो यस्मिन् रूपे ज्ञातः तद्रूपस्य माधवेन युक्तिभिर्विरोधं कृत्वा कपिलस्य वास्तविकमभिप्रायं प्रकाश्य बौद्धविदुषामज्ञानं विनाशितम्। माधवेन सांख्यसिद्धान्तस्य यस्मिन् रूपे प्रतिपादनं कृतं तद्रूपं कर्णगोमिनो भावनायाः प्रतिकेलमासीत्। अतस्तदर्थं तेन सांख्यनायक इति पदं प्रयुक्तम्। कर्णगोमियं



CCO. Vasishtha Tripathi Collection. By Siddhanta eGan

सम्प्रदायमनुस्मरति स्म। तत्र सांख्यसिद्धान्तस्य यद्रूपमवगतमासीत् तद्विपरीतो माधवेन स्वकीयो विचारो व्यक्तीकृतः, समुद्घाटितञ्च कपिलसांख्यस्य वास्तविकं रहस्यम्।

चीनयात्रिणो युआनच्यांगस्य यात्रावर्णने सांख्याचार्यस्य माधवस्योल्लेखोऽस्ति। अयं मगधप्रान्ते गयापरिसरे निवसति स्म। राज्यतः पर्याप्ता भूमि अस्मै दानरूपेण दत्ताऽसीत्। राज्यपरिषदि अस्य महती प्रतिष्ठाऽऽसीत्। अयं महाविद्वान् सांख्याचार्यनाम्ना प्रसिद्ध आसीत्। कालान्तरे तत्रत्येन तात्कालिनेन राज्ञा सामायोजितायां सभायां दक्षिणदेशनिवासिनागुणमतिबोधिसत्त्वनामकेन बौद्धविदुषा सहास्य शास्त्रार्थोऽभवत्। युआनच्यांगस्य लेखानुसारं बोधिसत्त्वस्य वैदुष्येण प्रभावितो राजा तत्रैकं बौद्धसंघारामं निर्मापितवान्। चीनीयात्रिणाऽस्यैव संघारामस्य वर्णनप्रसङ्गे सांख्याचार्यस्य माधवस्योल्लेखो विहितोऽस्ति।

एवं च पुराणेषु महाभारते च सांख्यस्यानेकेषामाचार्याणां यो निर्देशः समुपलभ्यते, तत्र कपिलासुरिपञ्चशिखवसिष्ठयाज्ञवल्क्यव्यासप्रभृतयः सन्ति प्रधानाः। सांख्यकारिकायां, सांख्यसूत्रे च केवलं सांख्याचार्याणामासुरि-पञ्चशिखसनन्दनामेव नामान्युपलभ्यन्ते। सांख्यकारिकायां प्राप्तसांख्याचार्याणां परम्परा अस्पष्टाऽस्ति। अत्र पञ्चशिखात् ईश्वरकृष्णस्य मध्येमहद् व्यवधानं विद्यते। एतदेव स्पष्टीकर्तुं युक्तिदीपिकायां माठरवृत्तौ, जयमंगलायां च



CC0. Vasishtha Tripathi Collection. By Siddhanta eGang...

महान् प्रयासः कृतोऽस्ति। एषु कियतामाचार्याणां नामानि गणयित्वा इत्यादिप्रभृतिपदयोजनायापीयं परम्परा अस्पष्टैवस्थापिता। परमार्थेऽपि केवलं पञ्चानां नामानिर्देशोऽस्ति सोऽपि महतीं सांख्यपरम्परां बोधयितुम-पर्याप्तोऽस्ति। युक्तिदीपिकायां पञ्चधिकरणपतञ्जलिबार्षगण्यैः सह हारीतवाद्धलिकैरातपैरिकऋषभेश्वर- कौण्डिन्यमूकानां नामान्यङ्गितानि सन्ति। माठरवृत्तौ भार्गवौलूकवाल्मीकि- हारीतदेवलानां नाम निर्दिष्टमस्ति। जयमंगलायां गर्गगौतममयोस्ल्लेखोऽस्ति परमार्थे गर्ग उलूकस्योपदेशक उक्तोऽस्ति। उलूकानन्तरमत्र वाद्धलेर्नामास्ति। जैनग्रन्थे तत्त्वार्थराजवार्तिकेऽपि स कपिल गार्ग्याभ्यां सह अक्रियावादिषु गणितः। गार्ग्यं उलूकादभिन्नः प्रोक्तः। एवं कपिलानन्तरं गार्ग्योलूकवाद्धलयः परमार्थग्रन्थाधारे क्रमिकरूपेण स्वीकर्तुं शक्याः।

## सनकादयः

एतेऽपि प्रसिद्धाः सांख्ययोगिन आसन्। सांख्यसूत्रात् पुराणात् भारताच्च ज्ञायते यदेते सांख्ययोगाचार्य आसन्। सांख्यसूत्रे (6/69) सनन्दनस्य मतमुपलभ्यते। अग्निपुराणे (382/10) सनकस्य मतं दृश्यते। विष्णुपुराणे (6/7/50) सनन्दनादयो ब्रह्मभावनानुरक्ताः प्रोक्ताः। एतेनानुमीयते यत् सांख्यस्य मौलिकसमस्यानां विचारविषये सनन्दनाचार्यस्य मतं महत्त्वपूर्णमासीत् पञ्चशिखस्याण्यवहितं पश्चादस्यनामोल्लेखाद् इदमपि



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosh

सिध्यति यत् सांख्यस्य परिवेशेऽस्वयमहत्त्वं पञ्चशिख नारदीयपुराणे सनन्दनाचार्य एव सांख्यस्योपदेशकोऽस्ति। नारदं तत्त्वज्ञानं कारयितुमत्र जनकपञ्चशिखयोर्भृगुभरद्वाजयोश्च संवाद उद्धृतोऽस्ति।

मनुस्मृतेःकुल्लूकभदरस्य टीकायां सनन्दनाचार्यस्यैकः श्लोक एवमुद्धृतोऽस्ति। तदुक्तं सनन्दनेन-

**भूतेन्द्रियमनोवुद्धिवासनाकर्मवायवः।**

**अविद्याचाष्टकं प्रोक्तं पुर्यष्टकमृषिसत्तमैः।।1।56**

महाभारते शान्तिपर्वणि 247 अध्यायेऽपि आत्मपुर्यष्टकं प्रोक्तम्। एतदध्यात्मविचारायावश्यकं प्रोक्तम्। अत्र पञ्च कर्मेन्द्रिय पञ्च ज्ञानेन्द्रिय-मनादिचतुष्टयपञ्चप्राणपञ्चभूतकार्यमविद्यारूपेणपुर्यष्टकमुपस्थापितम्। वर्णनमिदं सनन्दनस्योपर्युक्तेन श्लोकेन सामञ्जस्यमुपस्थापयति। उभयत्राविद्याया वर्णनमन्ते विद्यते। भूतवर्णनं महाभारते इन्द्रियानन्तरं विहाते। उपर्युक्तश्लोके इन्द्रियाणां वर्णनं भूतान्तरमस्ति। नात्र कश्चिद्व सैद्धान्तिको विरोधो दृश्यते। महाभारते पुर्यष्टकस्य सविस्तरं वर्णने सत्यपि अस्पष्टमस्ति नीलकण्ठेनास्यास्पष्टतांदूरीकर्तुं प्रयासो न विहितः, किन्तु केवलं संकेत मात्र कृतमस्ति।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri

# चतुर्थोऽध्यायः

## हरिहरानन्दारण्यास्य व्यक्तित्वं कृतित्वञ्च

सांख्यदर्शनपरम्रापोषकस्य स्वामिनो हरिहरानन्दारणस्य सम्बन्धे न तावत् पर्याप्तसामग्री समुपलभ्यते। समाजोद्धारकार्यलग्नः विषये यत् किमप्यासादितं तदत्र प्रस्तूयते -

### जन्मसमयः

सांख्यशास्त्रसमुद्धारलग्नस्य स्वामिनो हरिहरानन्दस्याविर्भावः 1869 ईश्वीयसंवत्सरे बङ्गप्रदेशे आभिजात्यकुले जातः सः 78 वर्षाणि यावत् पार्थिवशरीरं गभीरमध्ययनं विधाय भारतवर्षे कापिलोत्तस्य सांख्यदर्शनस्य प्रचाराय प्रसाराय च बभ्राम।

### कार्याणि मृत्युश्च

अनेन स्वामिना 1927-28 तम ईशवीयवर्षे वर्तमानझारखण्डस्य मधुपुरनामकस्थाने सांख्यमतप्रवर्तकस्य प्रसारार्थञ्चाजीवनं यतमानोऽभूत् **स्वामिहरिहरानन्दारण्य महोदयः**। यद्यपि स्वामिन एक एव लघुग्रन्थः सांख्यतत्त्वावलोकनामधेयोऽस्माकं पुरस्तात् विराजते तथाप्येतत्पुस्तक-प्रौढिदर्शनेनावगम्यते यत् अवश्वमेव स्वामिवर्यैरन्येषामपि ग्रन्थानां प्रणयनं कृतं स्यात्। स्वामिवर्याः कपिलोक्ततद्दर्शनसिद्धान्तानामेवासन् प्रचारकाः तत्र किमपि संशोधनपरिवर्तनपरिवर्तनार्थं नासन् सोत्सकाः स्वामिवर्याः। सांख्यदर्शने प्रभृतिदर्शनसिद्धान्तप्रवतकैः प्रचारकैश्च ये आक्षेपाः समुत्थापितास्तेषां सिद्धान्तानां



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri

तार्किकरीत्या खण्डनार्थं यतितं स्वामिना **हरिहरानन्दारण्येन** तदर्थमेव **सांख्यतत्त्वालोकनामकग्रन्थस्य** रचना स्वामिना कृता। **महार्षिः कपिलः** सर्वलोककल्याणपरायणः तस्य सिद्धान्ता अपि सर्वजनबोधगम्याः अतः जगति तत्सिद्धान्तप्रचारेण च सर्वकल्याणं सुनिश्चितमिति भावनाभावितः। **हरिहरानन्दारण्यः** आजीवनं न केवलम् सांख्यशास्त्रध्ययने तन्मण्डने एव प्रवत्तोऽपितु सामान्यजीवनेऽपि तदनुकूलाचरणे निरत इति तत्कृतकपिल-मठस्थापनादिकार्याण्यवलोक्य विज्ञायते। इत्थमाजीवनसांख्यसिद्धान्तप्रचार-प्रसारपरायणः हरिहरानन्दारण्यवर्यः 1947 तमे भारतवर्षस्वातन्त्र्यानन्दमनुभूयेलीलां समाप्य पञ्चतत्त्वे विलीनः। किन्त्विदानीमपि तत्परम्रानुयायिनः कपिलमठे विराजन्ते, तद्रचितग्रन्थानां संरक्षणप्रचारादिकञ्च कुर्वन्ति।

**विज्ञानभिक्षुः**

विज्ञानभिक्षुः नाम्ना प्रतीतेऽयं बौद्धो वा कश्चन संन्यासी वेति परन्त्वेतत्प्रतिपादितसिद्धान्तैरिदं निश्चीयते नायं बौद्धः सर्वत्राद्वैतप्रतिपादकत्वात् न च संन्यासी शङ्कराचार्यस्यापि तत्र तत्र स्फुटमालोचकत्वात्। स्वतन्त्रविचारकोऽयं स्वसिद्धान्तोपस्थाने न कस्यादपि बिभेति।

**विज्ञानभिक्षोः समयः**

भिक्षुरयं ख्रिष्टीये षोडशो शतके प्रादुर्बभूव इति आधुनिका विद्वांसः, विदुषा उदयवीरशास्त्रिणा इदं निर्धारितं यदयमाचार्यः ख्रिष्टीय चतुर्दशकमध्ये



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri

मध्यमभागे अविद्येतेति।[1] अस्मन्मते तु भिक्षुः षोडशशतके वर्तमान आसीदित्ये समीचीनं मतम्। विज्ञानभिक्षुमधिकृत्य किमप्युच्यते। विज्ञानेति नाम, भिक्षु इति चतुर्याश्रमज्ञापकः शब्द इति व्यक्तमेव प्रतीयते। गिरी-पुरी वनाख्यतीर्थाश्रमादिभेदा नातिप्राचीने काले आसन् इति निश्चप्रचमेव भिक्षुरिति शब्दस्यैव बाहुल्येन चतुर्थाश्रमिषु प्रयुज्यमानत्वात् स शब्द एव आचार्येण स्वनाम्नि प्रयुक्त इति प्रतिभाति। विज्ञानमृतभाष्येनोक्तम् - 'अन्तर्याभिगुरुपदिष्टज्ञान-विज्ञानभिक्षुणा' इति। अर्न्यामाति अस्य गुरोर्नाम इत्यनुमानं शक्यते किमनेन वाक्येन।

विज्ञानभिक्षुणा इमे ग्रन्थाः प्रणीताः प्रकाशिताश्च -

1. ब्रह्मसूत्रव्याख्यानभूतभाष्यम् - विज्ञानामृतनामकम्
2. योगवार्तिकम् - व्यासभाष्यव्याख्याद्भुतम्
3. योगसारसंग्रहः - चतुरंशविशिष्टोऽयं लघुग्रन्थः
4. सांख्यसारः - अस्य ग्रन्थस्य गद्यमयपूर्वभागाः पद्यमयभागः उत्तरभागश्च
5. कासांश्चिद् उपनिषदाम् आलोकनाम्नी व्याख्याप्रसिद्धमिदं यद् भिक्षुणा प्रश्न-कठ-तैत्तिरीया-मुण्डक-माण्डूक्य-कैवल्य-मैत्रेयी-श्वेताश्वेतरोपनिषदां व्याख्यानानि विरचितानि।
6. पाषाणमतखण्डनम् - अस्य कोशोऽद्यापि विद्यते, द्र. गोपीनाथकविराजकृत 'काशी की सारस्वतसाधना' नामधेयीग्रन्थः।

---

[1] सांख्यदर्शन का इतिहास, पृ. 304



CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri

## माठराचार्य:

### माठरस्य काल:

माठरवृत्ति: सांख्यकारिकाया: प्रामाणिकं भाष्यमस्ति। भाष्यमिदं भिक्षो: परमार्थस्य अनुवादग्रन्थाद्धिरण्य सप्ततिरित्यख्येयात्प्रयाग् लिखितम् (570 ख्रिष्टाब्दे) इदं समाश्रित्य माठरस्य काल: पंचषष्ट शतकयो: सन्निधावस्तीति कल्प्यते। माठरवृत्तेरुल्लेख: अनुयोगद्वारसूत्राख्येये जैनानां ग्रन्थे द्रष्टुं शक्यते। यस्य च रचनाकाल: 100 ख्रिष्टावदे कथ्यते इदमाश्रित्य माठर: कनिष्कस्य समकालिक: इति स्वीक्रियते। यद्येवं स्वीक्रियते तर्हि माठरस्य समय: खिष्टाशब्दस्य प्रारम्भ प्राय: एव सम्भावते।

### माठरवृत्ति:

माठराचार्यस्य नाम्न:, सांख्यकारिकाया: एका विस्तृता टीका वर्तते। इमां 'माठरवृत्तिरि कथयन्ति विद्वान्स: गौड़पादभाष्यादस्या: अत्यधिकं साम्यं विद्यते, यदिदं प्रतीयते यदस्या: टीकाया: संक्षेपो गौडपादभाष्यमेव स्यादिति।[2] अस्या: टीकाया उल्लेखो जैनानामनुप्रयोगद्वारख्ये विक्रमद्वितीयशतकस्य ग्रन्थे विद्यते। परंच ग्रन्थोऽयं नैवोपलभ्यते। 'चौखम्बा-संस्कृत-सीरिज' इति संस्थानतो माठर-वृत्तिरिति नाम्ना टीका प्रकाशतां नीता। प्रतीयते यत् गौडपादभाष्यमाधृत्येयं बृहद्रूपे लिखितेति उमेशमिश्रस्य[3] मतं विद्यते।

2 श्री ब्रजमोहन चतुर्वेदी-'सांख्यकारिका' पृ. 55

3 श्री उमेशमिश्र:-'भारतीयदर्शन' पृ. 277



CCO. Vasishtha Tripathi Collection. By Siddhanta eG

## माठरवृत्त्याः समयः

अस्मिन् विषये निर्णायकमेकं प्रमाणमुपस्थाप्यते। जैनसम्पदायस्य 'अनुयोगद्वारसूत्राख्ये ग्रन्थे संदर्भ एक इत्थमस्ति -

अनुप्रयोगद्वारसूत्रस्यास्मिन् प्रसङ्गे केचनार्यग्रन्थाः केचन चान्ये ग्रन्था निर्दिष्टा ये जैन सम्प्रदायाद्बहिर्भूताः सन्ति। सूच्यामस्यां माठरोऽप्युल्लिखितः। इदानीं यावत् सांख्य-सप्तत्याः व्याख्याम् माठर-वृत्तिं विहाय, अस्यनाम्नोऽन्यः कश्चिद्-ग्रन्थो न विज्ञायते। अस्यां सूच्यां सांख्यस्यान्येषामपि ग्रन्थानामुल्लेखोऽस्ति। एकश्च 'कणगसत्तरी' विद्यते। इदंचेश्वरकृष्णरचितं सांख्यसप्तत्या नामास्ति।

अनुयोगद्वारसूत्रस्यास्मिन् प्रसंगे केचनार्यग्रन्थाः केचनाचान्ये ग्रन्था निर्दिष्टाः ये जैनसम्प्रदायाद्वार्हिर्भूताः सन्ति। सूच्यामस्यां माठरोऽपि उल्लिखितः। इदानीम् यावत् सांख्यसप्तयाः व्याख्याम् माठरवृत्तिं विहाय, अस्य नाम्नोऽयं कश्चिद् ग्रन्थो न विज्ञायते। सूच्यामस्यां सांख्यस्यान्येषामपि ग्रन्थानामुल्लेखो वर्तते। एकश्च कणगसत्तरी विद्यते। इदं चेश्वरकृष्णरचितं सांख्यसप्तया नामास्ति।

कनकसप्ततिः सुवर्णसप्ततिः, हिरण्यसप्ततिर्वेति नामानि चीनी विद्वत्सु सांख्यसप्तत्यै प्रसिद्धानि सन्ति।[4] कणगसत्तरी इत्यस्याः सांख्यसप्ततिरित्यर्थोऽन्यै-र्विद्वद्भिरपि स्वीकृतः। सांख्यस्यापर एको ग्रन्थोऽस्यामेवसूच्यां

4 Article of (तकाकुसु) - journal of Royal Asiatic Society (G.B.) 1918 P- 47



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri

कापिलषष्टितन्त्रमित्युल्लिखतमस्ति। अनेनैव सह माठरस्यापि निर्देशोविद्यते। एतस्मादेतदेवाधिक्येन सम्भाव्यते। यदस्यां सूच्यां 'माठर' इति पदं सांख्यसप्तत्याः व्याख्यायै माठरवृत्यायेव प्रयुक्तम्। आधुनिका विद्वान्सोऽनुयोगद्वारसूत्रस्य समयं प्रथमखिृष्टशतकान्तमिति निर्णयं प्रापयन्ति। यथैतत् सत्यतया स्वीक्रियते तहीदं निश्चिततया कथयितुं शकयते यत् मारवृत्याः समयः खिृष्टप्रथमशतकम् भवितुमर्हति। रामायणे महाभारत-कपिलषष्टितन्त्रसांख्य सप्तत्यादीनां प्रसिद्धानां ग्रन्थानां सूच्यां **'माठर'** इत्यस्योल्लेखः तस्य तात्कालिक्याः प्रसिद्धया जनतायाञ्च तस्य प्रतिष्ठायाः द्योतकोस्ति। अस्याः प्रसिद्धयाः एवञ्च प्रतिष्ठायाः प्राप्त्यै खिृष्टप्रथमशतकम् यस्याः समयोऽतिसमीचीनोऽस्ति।[5]

**गौडपादाचार्यः**

भाष्यकर्तृर्नाम गौड़पादोऽस्ति। यः शंकराचार्यस्य प्रगुरोः गौड़पादाभिन्न आसीदिति मन्यते श्रीवाचस्पतिगैरोला' महोदयः। तन्मते आचार्य गौड़पादस्य समयः पंचषष्ट-शतकयोः सन्निधौस्थापयितुं शक्यते।[6]

परंच बल्देवोपाध्यायो गौड़पादस्य समयः सप्तमशतकस्य सन्निधौ मन्यते।[7] उदयवीरशास्त्रिमहोदयो गौड़-पादस्य समयः षष्टशतकस्यान्तः 550

---

5 A.B Dhruva in his essay (त्रिविधमनुमानम्) - Published in Proceedings and Transactions Of first Oriental Congress Vol.2 P. 270 Royal Asiatic Society (G.B.) 1918 P- 47 .

6 श्री वाचस्पतिगैरोला - 'भारतीय दर्शन' पृ. 294

7 श्री बलदेवोपाध्यायः - 'भारतीय दर्शन' पृ. 318



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri

खिृष्टाशब्दस्य सन्निधौ स्थापयति।[8] अस्मादूर्ध्वमस्य समयो भवितुं नार्हति यतोहि जयमङ्लाया व्याख्याकर्तुरयं गौड़पादः पूर्ववर्ती आचार्यः स्यात्। अस्यकारणमिदं यत् त्रिचत्वाशिंत् कारिकाया व्याख्याने माठरः, युक्तिदीपिकाकारः गौडपादश्च त्रयाणां भावानां प्रतिपादनमकुर्वन्। यदा च जयमङ्गलाया व्याख्याकारो, वाचस्पतिमिश्रः चन्द्रिका च द्वयोरेव भावयोः प्रतिपादनमकुर्वन्। अस्यायमाशयो यत् जयमङ्गलायाः प्राचीनतरा व्याख्याकारः तस्यामार्ययां त्रयाणां भावनां प्रतिपादनं मन्वते। जयमङ्गलाकारः तदस्वीकृत्य द्वयोरेव भावयोः तस्यां निर्देशं स्वीचक्रे।

तस्य च परावर्तिनो व्याख्याकाराः तस्यैवार्थं स्वीचक्रुः। अतोऽस्माद्धेतोरेव युक्तिदीपिकाया जयमङ्गलाश्च मध्ये गौडपादस्य समयेन भाव्यम्। जयमङ्गलायास्समयः सप्तशतकस्यान्तो मतः। अतो गौडपादस्यापि समयः विक्रमषष्ट शतकस्यान्तः 550 खिृष्टाब्दस्य सन्निधौ-एव संगतः स्यादिति। जयमङ्गलायाः समयः सप्तमशतकस्यान्तोऽस्ति। गौड़पादभाष्यं च प्राचीनतरं जयमङ्गलाया अतो गौडपादस्य समयो युक्तिदीपिका जयमङ्गलयोर्मध्ये विक्रमषष्टशतकस्यान्तः 550 खिृष्टाब्दस्य सन्निधावेव युक्तियुक्त इति।

**वाचस्पतिमिश्रः**

श्री गंगानाथ 'झा' सांख्यतत्त्वकौमुद्याः एकं संस्करणं संपादितवान् यत् चतुस्त्रिंशदधिकैकोनविंशतिशतमिति (1934) इति खिृष्टाब्दे

8 श्री उदयवीरशास्त्री – 'सांख्यदर्शन का इतिहास' पृ. 473



CC0. Vasishtha Tripathi Collection. By Siddhanta eG...

ओरियण्टल-बुक-एजेन्सी पूनातः प्रकाशितमस्ति। अस्य भूमिकायां डा. 'झा' इदं सिद्धमकरोत् यत् वाचस्पतिमिश्रः एकचत्वारिंशदधिकाष्टशतमिति (841) ख्रिष्टाब्दे बभूव। परंच श्री दिनेशचन्द्रो भट्टाचार्यः स्वकीये निबन्धे डा. गंगानाथस्य तर्केष्वापत्ति प्रकटयन्निदं सिद्धमकरोत् यद् वाचस्पतिमिश्रस्य कालो ख्रिष्टदशशतकस्योत्तरार्धे आसीत्। अनयोर्द्वयोरपि विदुषोर्मतयोविश्लेषणं श्रीउदयवीरशास्त्री कृतवान। तन्मतानुसार वाचस्पतिमिश्रस्य समयः एकचत्वारिंशदधिकाष्टशतम् (841) ख्रिष्टाब्दः विक्रमाब्दो वेति त्वस्त्येव, किन्तु विषयेऽस्मिन् श्री गंगानाथो 'झा' याः युक्तीः उपस्थापयाम्बभूव ताः विवादस्पदाः सन्ति। अतः श्रीउदयवीरशास्त्रिणो मतमवलम्ब्य कथयितुं शक्यते यद्वाचस्पतेः समय एकचत्वारिंशदधिकाष्टशतम् (841) ख्रिष्टाब्दः अस्ति।[9] परंचायं विषयो विवादस्पद एव। अतः एव पुनः विचारणीयोऽस्ति।

श्री व्रजमोहनचतुर्वेदीमहोदयः स्वकीये 'सांख्यकारिका' इति ग्रन्थेऽलिखित् यत् साङ्ख्यकौमुद्याः रचयिता मिथिला निवासी श्रीवाचस्पतिमिश्रः आसीत्। अस्योपस्थिति कालस्य जीवनस्य च सम्बन्धे ऐतहासिकानां वैमत्यं विद्यते। अस्य समयः खिष्टाब्दस्य त्रयशीत्यधिकसप्तशतम् (783) इत्यस्य सन्निधावस्ति।[10] अतः श्रीव्रजमोहनचतुर्वेदी एव मतं मान्यमस्ति।

---

9 श्री उदयवीरशास्त्री – 'सांख्यदर्शन का इतिहास' पृ. 473

10 श्री ब्रजमोहनचतुर्वेदी – 'सांख्यकारिका' पृ. 55



CCO. Vasishtha Tripathi Collection. By Siddhanta eG

**सांख्यतत्त्वकौमुद्याः समयः-**

षड्दर्शनव्याख्याकारस्य वाचस्पतिमिश्रस्य समयस्तु सर्वथा निश्चित एव। यद्यप्यसौ सांख्यतत्त्वकौमुद्याः- समयस्य अस्य ग्रन्थस्य चारम्भस्य समाप्तेर्वा न कमपि निर्देशक-करोत्। परञ्च न्यायवार्तिकतात्पर्य-टीकायाः समाप्तौ गौतमस्य मूलानां न्यायसूत्राणां संपादनं कृत्वा तेषां न्यायसूची निबन्धः इति नामाल्लेखं कृतवान्। तस्य समाप्तौ सन्ति केचनोपसंहारत्मकाश्श्लोकाः। तेष्वन्तिमे श्लोके ग्रन्थस्य समाप्तेः सम्वत्सरस्य निर्देशः कृतः। तत्र लिखितम्-

**''न्याय सूची निबन्धोऽसावकारि सुधियां मूदे।**

**श्री वाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे।।''**

तदनुसारमष्टनवत्यधिकाष्टशतम् (898) इति सम्वत्सरे श्रीवाचस्पतिमिश्रो ग्रन्थमिमं समाप्तिं निनाय।

पञ्चमकारिकायाः व्याख्यायां वाचस्पतिः लिखति सर्वं चैतदस्माभिर्न्यायवर्तिकतात्पर्यटीकायां व्युत्पादितमिति-नेहोक्तं विस्तरभयात् (बालरामोदासीन संस्करणं पृष्ठ 105) नवमकारिकाया व्याख्याङ्कुर्वन् तत्त्वकौमुद्यां लिखितम् अभावस्तु भवोत्पत्तावित्यादि न्यायवार्तिकतात्पर्यटीकायां कथितमस्माभिः (बालरामोदासीन संस्करण पृष्ठ 147) सप्तदशाख्यायाः कारिकायाः व्याख्यायां लिखितम् - सर्वानुमानोच्छेदप्रसङ्ग इत्युपपादितं न्यायवर्तिक-तात्पर्यटीकायामस्माभिः (बालरामोदासीन संस्करणपृष्ठ-



CCO. Vasishtha Tripathi Collection. By Siddhanta eG...

244-226) सांख्यतत्त्वकौद्यामेभिरुल्लिखितैरिदं स्पष्टं ज्ञायते। यत् न्यायवर्तिकतात्पर्यटीकाया रचना तत्त्वकौमुद्या: प्रागेवाभवत्। इदमेवाधृत्य तात्पर्यटीकाया: न्यायसूची निबन्धस्य समाप्तया: संवत्सरे द्वौ वर्षौ च सम्मेल्य सांख्यतत्त्वकौमुद्या: रचनाया: सम्वत्सरो विक्रमनवमशतक-मित्यमानि, यश्चत्रिचत्वारिशदधिकाष्टशतमिति (843) ख्रिष्टाब्देभवति[11] एरिच फ्रौवालनराध्ययनुसारम् पञ्चाशदुत्तराष्टशताब्दे (850. ए. डी.) ईसवीयशब्दे वाचस्पतिमिश्र: स्वकीयाम् तत्त्व-कौमुदीम् टीकामलिलेख। असौ टीका साङ्ख्यशास्त्रऽत्युत्तमेति स्वीकृता विद्वद्भिरिति।[12]

11 श्री उदयवीर शास्त्री - 'सांख्यदर्शन का इतिहास' पृ. 340

12 Of the uumerous Commentaries may be named Vachaspati Misra's Samkhya Tattva -Kaumudi ed. Ramesh Chandra Calcutta Sanskrit Series No. XV Calcutta 1935 Erich Frauwallner :- History of Sanskrit Philosophy Page- 385



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri

# उपसंहार

भारतीयदर्शनेषु सांख्यदर्शनस्य स्थानं अतीवादरास्पदमस्ति। वैदिक-विश्वदर्शनेऽपि सांख्यदर्शनं प्रमुखं प्रथमञ्च परिगण्यते। वस्तुतः सर्वदर्शनेषु सांख्यदर्शनप्राथम्ये कानिचित् महत्त्वपूर्णानि कारणानि दृश्यन्ते।

भारतीयदर्शनशास्त्रपरम्परायां महर्षिकपिलः सांख्यदर्शनस्य प्रवर्तको मन्यते। प्राचीनदार्शनिकसाहित्ये कपिलस्यानेके उल्लेखाः लभ्यन्ते।

कपिलस्य कृतिविषयेऽपि विद्वत्सु मतैक्यं न दृश्यते। अनेकेषामाधुनिक-विदुषां मतमस्ति यत्कपिलः। सांख्यशास्त्रस्य आदि प्रवर्त्तक आसीदिति वक्तुं शक्यते। परन्तु सांख्यशास्त्रमधिकृत्य तेन कश्चित् ग्रन्थोऽपि विरचित इति वक्तुं न शक्यते। प्राचीनभारतीयपरम्परा षष्टितन्त्रं कपिलस्य रचनां स्वीकरोति। पञ्चशिखस्य प्रसिद्धकथने 'आदिविद्वान् निर्माणचित्तमधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच'[1] इत्यत्र कपिलस्योपदेशाय तन्त्रशब्दस्य प्रयोगः मतस्यास्य पुष्टिः ईश्वरकृष्णस्य वचनैरपि भवति।[2]

महर्षिकपिलस्य प्रथमः शिष्यः आसुरिति नाम्ना सुविख्यातमठारवृत्ते सांख्यग्रन्थेषु चाऽऽसुरिः ध्येको गृहस्थो द्विजो वर्त्ततेति प्रसङ्गो सुरिरिति संज्ञा समुपलभ्यते। भगवता महर्षिणा कपिलेन तस्मै चासुरये सांख्यज्ञानं प्रदत्तम्।

1 यो. भा. 1/25 इत्यत्रोद्धृतम्

2 सां. का. 70



CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri

महाभारते शान्तिपर्वणि (अ. 326तः 328यावत्)। आसुरिकपिलयोः परस्परं सम्भाषणं प्राप्यते। तेनैव स्पष्टीभवति

श्रीमदभागवतानुसारं वशिष्ठस्य परम्परा एवयदन्महर्षेः कपिलादेवाऽऽसुरिणा तत्त्वज्ञानोपदेशः प्राप्तुं महाभारते प्रसङ्गतो ग्रन्थेषु स्थलेषु चाप्यासुरे प्रसङ्गो प्राप्यते। मुच्यते। ब्रह्मणो मानसपुत्रो वशिष्ठः। तस्यात्मजः शक्तिः। तदात्मजः पराशरः। तदात्मजश्च व्यासः। एवं ब्रह्मणः चतुर्थ्या परम्परायां व्यासस्यास्तित्वमुच्यते।

महर्षि आसुरेः शिष्याणां मध्ये पञ्चशिखः प्रमुखशिष्य आसीत्। महाभारतस्यैनेके श्लोके प्रतीयते यत् पञ्चशिखः पाराशरगोत्रे समुत्पन्नः। एषां महाभागानां मातुर्नाम 'कपिला' इति ज्ञायते। पञ्चशिखः सुदीर्घायुष्यशाली पुरुष आसीदिति शास्त्रानुशीलनेन ज्ञायते। महाभारते पुरुष आसीदिति शास्त्रानुशीलनेन ज्ञायते।

सांख्यकारिकायाः कर्त्ता ईश्वरकृष्णोऽस्ति। स चैकसप्तत्यां कारिकायां स्पष्टतयोल्लिखितः।[3] परञ्चासौ ईश्वरकृष्णः कोऽस्ति कदा कुत्रोत्पन्ना इति निश्चिततया नैव किञ्चिदद्विजायते। सांख्यस्य क्षेत्रेऽस्य महती प्रतिष्ठा विद्यते।

महाभारतस्य शान्तिपर्वणि 220-222 त्रयाणामध्यायानां वर्णनेन स्पष्टं प्रतीयते यत् जनकः पञ्चशिखस्य शिष्येषु अन्यतम आसीत्। मिथिलायां जनक नामानोऽनेके राजानो बभूवुः।

---

3 शिष्यपरम्परया आगतमीश्वरकृष्णेन चैतदार्याभिः।
संक्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम्।। सां. का. 71



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan K...

सांख्याचार्यो याज्ञवल्क्यो दैवरातिजनकाय तद्द्वारा प्रश्ने कृते सांख्यतत्त्वानां विस्तरेणोपदेशो दत्तः।[4]

अयं ब्रह्मणो मानसपुत्रः प्रोक्तः।[5] श्रीमद्भागवते कपिलस्य भगिनीपतिः प्रोक्तः। कर्दमस्य पुत्र्या हविर्भुजा सह पुलस्त्यस्य उद्वाहः अभवत्।[6]

महाभारते सभापर्वणि देवलस्योल्लेखः प्राप्यते।

**भीणी ज्योतिषि पुरूष इति वै देवलोऽब्रवीत्।**

**अपत्यं कर्म विद्या च यतः सृष्टाः प्रजास्ततः।।**

ब्रह्मवैवर्तपुराणे असितस्य वर्णनं पुत्रार्थितपस्विरूपेऽस्ति।[7] देवनिमित्तकत्वादयं देवल इति नाम्ना प्रसिद्धो जातः। एवं देवल एतत्पुराणानुसारमसितस्य पुत्रः सिद्धयति।

वार्षगण्यः सांख्ययोगस्य विश्रुतः आचार्यः आसीत्। अस्य नाम महाभारतस्य सांख्याचार्याणां सूचौ प्राप्यते। चीन परम्परायां तिब्बतपरम्परायाञ्च-अस्य शब्दस्य नाम वृषः वृषगणो वा प्राप्यते यः संस्कृत वर्षस्य वार्षगण्यस्य वा विकृतं रूप प्रतीयते।

ईश्वरकृष्णकृतायां सांख्यकारिकायां 71 कारिकाया युक्तिदीपिकायां कौण्डिन्यमूकयोरपि आचार्ययोरूल्लेखोऽस्ति। परमनयोः सम्बन्धे एतादवदेव वक्तं

---

4 महा.शा.प. (315/323- अध्याये)

5 महा. (6/10)

6 श्रीमद् भा. (3/24/22)

7 ब्र.वै.पु. (4/30)



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

शक्यते थद्युक्तिदीपिकामन्यैः आचार्यैः सहैतयोरपि नाम्नी निर्दिष्टे स्तः। नानयो सम्बन्धे किञ्चिदन्यज ज्ञायते।

भारतीयजीवने दर्शनस्यातीव समुह्नतरोपयोगिता वर्त्तते। भारतीयाः संस्कृतेरितिहासः वस्तुतोऽत्र भारतीयदर्शनेतिहासस्य सविपुलं स्वरूपमस्ति। विचाराणान्नूतनमेधाः नैकधाऽस्मिन् लोके समागताः विचाराणां रसमदनिर्झराः एव दर्शनमासीत्। एतादृशाः निर्झरारचस्यां भूमौ सहस्रकालपर्यन्तं नैकेषु भागेषु निर्झरिताः किन्तु सर्वत्रैव कर्मणां पृष्ठे नित्यमेवैका दार्शनिकी पृष्ठभूमिर्भवति। एकस्मिन् काले वेदानां प्रमाणवादः भारतीयविचाराकाशस्यध्रुवनक्षत्रस्यासीत्। येन नित्यमेवाऽस्माकं देशस्य दर्शनमध्यात्मप्रकाशेन प्रकाशितं वर्तते। यस्मिन् काले दर्शनक्षेत्रेषु विभिन्नानि मतानि समुद्भूतानि। न तत्समये सांख्यशास्त्रस्य जन्मभूत। अपितु सर्वतः पूर्वसांख्यशास्त्रस्यमेव सर्वत्र प्रसूतम्। यच्छास्त्रैः प्रकृतेः सृष्टिप्रक्रियायाश्च व्याख्या सुविस्तृता।



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

# संदर्भग्रन्थसूची

1. ईशादि नौ उपनिषद् (शाकङ्करभाष्यसहितम्), गीताप्रेस, गोरखपुर, 2009

2. तत्त्वमुक्तावली, डॉ. विजयनारायणमिश्रः, सम्पूर्णनन्दसंस्कृतविश्वविद्यालयः वाराणसी, 1992

3. तत्त्वसमाससूत्रम्, डॉ. रामशङ्करभट्टाचार्यः भारतीयविद्याभवनम्, वाराणसी, सं. 2022

4. तत्त्वार्थसूत्रम्, पं. सुखलालसंघवी, पार्श्वनाथविद्याश्रमशोधसंस्थानम्, वाराणसी, 1985

5. पातञ्जलयोगदर्शनम्, डॉ. श्रीनारायणमिश्रः भारतीयविद्याप्रकाशनम् वाराणसी, 1992

6. पुराणपर्यालोचनम्, डॉ. श्रीकृष्णमणित्रिपाठी चौखम्बासुरभारती प्रकाशनम्, वाराणसी, 1992

7. ब्रह्मसूत्रम् (शाङ्करभाष्यसहितम्), चौखम्बासंस्कृतसंस्थानम्, वाराणसी, 2004

8. भागवतपुराण, वेदव्यासः, गीताप्रेस, गोरखपुर. सं. 2006



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

9. भारतीयदर्शन, चन्द्रधरशर्मा, मोतीलालबनारसीदासः, देहली, 1998

10. मधुसूदन्यां तत्त्वाधानम्, डॉ. रविशङ्करशुक्लः, मान्यताप्रकाशनम्, नवदेहली, प्रथमसंस्करणम्, 2009

11. युक्तिदीपिका, अज्ञातकर्तृका, डॉ. रामचन्द्रपाण्डेयः मोतीलालबनारसीदासः, वाराणसी, प्रथमसंस्करणम्, 1967

12. योगसूत्रम्, पं. बलदेवमिश्रः चौखम्बासंस्कृतसंस्थानम्, वाराणसी, सं. 2041

13. श्रीमद्भगवद्गीता (शाङ्करभाष्यसहितम्), गोयन्दकाहरिकृष्णदासः, गीताप्रेस, गोरखपुर, 2010

14. श्रीविष्णुपुराण, श्रीमुनिलालगुप्तः गीताप्रेस, गोरखपुर, सं. 2066

15. श्लोकवार्त्तिकम्, कुमारिलभट्टः, शर्माश्यामसुन्दरः, भारतीयविद्यासंस्थानम् वाराणसी, 1978

16. संस्कृतशिक्षणम्, डा. उदयशङ्करझा, चौखम्बासुरभारतीप्रकाशनम्, वाराणसी, 2011



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

9. भारतीयदर्शन, चन्द्रधरशर्मा, मोतीलालबनारसीदासः, देहली, 1998

10. मधुसूदन्यां तत्त्वाधानम्, डॉ. रविशङ्करशुक्लः, मान्यताप्रकाशनम्, नवदेहली, प्रथमसंस्करणम्, 2009

11. युक्तिदीपिका, अज्ञातकर्तृका, डॉ. रामचन्द्रपाण्डेयः मोतीलालबनारसीदासः, वाराणसी, प्रथमसंस्करणम्, 1967

12. योगसूत्रम्, पं. बलदेवमिश्रः चौखम्बासंस्कृतसंस्थानम्, वाराणसी, सं. 2041

13. श्रीमद्भगवद्गीता (शाङ्करभाष्यसहितम्), गोयन्दकाहरिकृष्णदासः, गीताप्रेस, गोरखपुर, 2010

14. श्रीविष्णुपुराण, श्रीमुनिलालगुप्तः गीताप्रेस, गोरखपुर, सं. 2066

15. श्लोकवार्त्तिकम्, कुमारिलभट्टः, शर्माश्यामसुन्दरः, भारतीयविद्यासंस्थानम् वाराणसी, 1978

16. संस्कृतशिक्षणम्, डा. उदयशङ्करझा, चौखम्बासुरभारतीप्रकाशनम्, वाराणसी, 2011



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri

17. सांख्यकारिका (गौडपादभाष्यसहितम्), गौडपादशास्त्रीगुरुप्रसादः, राजपाल एण्ड सन्स, देहली, 1986

18. सांख्यकारिका, ईश्वरकृष्णः, सन्तनारायणः, सुदर्शनप्रकाशनम्, देहली, 2006

19. सांख्यकारिका (माठरवृत्तिसहिता), पं. विष्णुप्रसादशर्मा चौखम्बासंस्कृतप्रकाशनम्, 1970

20. सांख्यतत्त्वकौमुदी, वाचस्पतिमिश्रः, शास्त्री डॉ. गजाननमुसलगाँवकरः, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, 1990

21. सांख्यतत्त्वकौमुदी, (विद्वन्तोषिणी), बालरामोदासीनः भारतीयविद्यासंस्थानम्, वाराणसी, 1911

22. सांख्यतत्त्वमनोरमा, पाण्डेयो डॉ. दीनानाथः, मनोरमा प्रकाशनम्, वाराणसी, 1911

23. सांख्यतत्त्वमनोरमा, ईश्वरकृष्णकृत, डा. दीनानाथपाण्डेयः, मनोरमाप्रकाशनम् प्रथमसंस्करणम् 1991



CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri

24. सांख्यतत्वप्रवचनभाष्यम विज्ञानभिक्षु:, मोतीलालबनारसीदास, देहली, 1997

25. सांख्यदर्शनम् कपिल:, उदयवीरशास्त्री, सुदर्शनप्रकाशनम्, देहली, 1997

26. सांख्यदर्शनम् विज्ञानभिक्षुः शास्त्री डा. गजाननमुसलगाँवकर:, चौखम्बासंस्कृतसंस्थानम्, वाराणसी 2006

27. सांख्यदर्शनम् जनार्दनशास्त्रीपाण्डेय:, मोतीलालबनारसीदास:, वाराणसी, प्रथमसंस्करणंम्, 1981

28. सांख्ययोगकोश:, त्रिपाठी आचार्यकेदारनाथ:, काशीहिन्दूविश्वविद्यालय:, वाराणसी, 1989

29. सांख्यसंग्रह: द्विवेदी आचार्यविन्ध्येश्वरी, चौखम्बाविद्याभवनम्, वाराणसी 1996



CCO. Vasishtha Tripathi Collection. By Siddhanta

